# नई उमर के नये रंग





मौज ही मौज
स्कूल में आए
नए फ़ेविक्रिल
स्टूडेंट पोस्टर कलर्स
ऐसा रंग जमाएं
रंग मुलायम उभरा-उभरा
तोता–हरा-हरा लगे खरा
चटख लाल, नीला,
चमकीला
सफेद निराला



ज्यों बर्फीला
हर रंग अलबेला
तो झटपट चित्रों में रंग भरो
नए फेविक्रिल स्टूडेंट
पोस्टर कलर्स के संग
मौज करो !

देख तुम्हारा काम और
इसका दाम मम्मी हुई हैरान !





मुफ़्त
पेंट-ए-पोस्टर

पाने के लिए इस पते पर लिखें–फ़ेविक्रिल, पो. बॉक्स 17401, अंधेरी (पूर्व) बंबई- 400 059

नए पिडिलाइट
## फ़ेविक्रिल®
स्टूडेंट पोस्टर कलर्स

फ़ेविकोल ब्राण्ड एढ्हेसिव के निर्माता पिडिलाइट की ओर से

मुफ़्त
हर लिलिपुट किट के साथ स्टेन्सिल







everest/81/PIL/117/HIN

---

कृपया मेरे लिए मुफ़्त फ़ेविक्रिल पेंट-ए-पोस्टर तुरंत भेज दें.

नाम : ____________ उम्र : ____________

पता : ____________

____________

स्कूल ____________

CDM

# वाक्यजिज्ञासा – ३

(चिन्तनार्हविषययुक्तं वाक्यं, स्थूलाक्षरैः मुद्रितम् उपरि भवति। तस्य अधः तत्सम्बद्धं विवरणं भवति। ततः अन्यत् वाक्यं, पुनः विवरणम्। एवम् अत्र क्रमः।

विवरणसन्दर्भे प्रथमं साररूपेण किञ्चित् उच्यते। अनन्तरं तस्य स्पष्टज्ञानार्थं शास्त्रीयं विवरणम् अपि दीयते। शास्त्रीयविवरणस्य ज्ञाने केचन क्लेशम् अनुभवेयुः। तादृशाः, वाक्येन वाक्यद्वयेन वाक्यैः वा प्रथमं दत्तं सारभागं पश्यन्ति चेदपि अलम्। तावता एव 'किं शुद्धम्' इति ज्ञायते। 'किमर्थम् एवम्' इति ये ज्ञातुम् इच्छन्ति तादृशानां कृते अग्रिमं विवरणम्।)

## १४. शिवराजेन देशस्य लज्जा रक्षिता।

o **'मानः रक्षितः'** इति, **'गौरवं रक्षितम्'** इति वा प्रयोगः उचितः। 'लज्जा रक्षिता' इति प्रयोगः तु प्रादेशिकभाषाप्रभावात् कृतः। 'देशस्य लज्जायाः रक्षणम्' इत्येषः अर्थः एव सर्वथा असङ्गतः। देशस्य मानः गौरवं वा रक्ष्यते। अतः मानः रक्षितः इति, गौरवं रक्षितम् इति वा प्रयोक्तव्यम्।

## १५. दशवर्षात् सः सङ्गीताभ्यासं कुर्वन् अस्ति।

o 'दशवर्षात्' इति प्रयोगः असाधुः। **'दशभ्यः वर्षेभ्यः'** इति प्रयोक्तव्यम्। दशाशब्दः किमर्थं प्रयुक्तः? वर्षगतं बहुत्वं (दशत्वम्) प्रदर्शनीयम् इति उद्देशेन खलु? अतः वर्षशब्दोत्तरं बहुवचनप्रत्ययः एव स्यात्, न तु एकवचनप्रत्ययः। 'वर्षात्' इति रूपं तु एकवचनत्वं द्योतयति। अतः 'वर्षेभ्यः' इति रूपं प्रयोक्तव्यम्।

'दशभ्यः वर्षेभ्यः' इति व्यस्तप्रयोगः एव उचितः, उत 'दशवर्षेभ्यः' इति समस्तप्रयोगः, उत उभयम् अपि इति कश्चन संशयः उत्पद्येत। 'दशभ्यः वर्षेभ्यः' इति व्यस्तः प्रयोगः एव साधुतरः। यतः–

'दिक्संख्ये संज्ञायाम्' (२.१.५०) इति पाणिनिसूत्रम्। 'दिक्संख्ये समानाधिकरणेन सुबन्तेन संज्ञायाम् एव समस्येते, सः तत्पुरुषः' इति सूत्रार्थः। एवं च सङ्ख्या संज्ञायाम् एव (सप्तर्षयः इत्यादिषु संज्ञारूपेण प्रसिद्धेषु स्थलेषु एव) समानाधिकरणेन समस्यते, न तु इतरत्र इति सिद्धम्। 'दश वर्षाणि' इत्यत्र सामानाधिकरण्यम् इष्यते। संज्ञात्वं तु नास्ति। अतः एतादृशे स्थले समासः

(तत्पुरुषः) न करणीयः इति सूत्रस्य आशयः।

किन्तु 'त्रिलोकनाथः पितृसद्मगोचरः' इति कालिदासप्रयोगः। 'षोडशपदार्थानाम्' इति अन्यः प्रयोगः। एतेषु स्थलेषु मध्यमपदलोपिसमासम् आश्रित्य (त्र्यवयवः लोकः त्रिलोकः इति, षोडशसङ्ख्याकाः पदार्थाः षोडशपदार्थाः इति च विग्रहवाक्यम्) साधुत्वम् उक्तम्। तुल्यन्यायेन 'दशवर्षेभ्यः' इत्यत्रापि दशसङ्ख्याकानि वर्षाणि इति विग्रहवाक्यम् उक्त्वा मध्यमपदलोपिसमासम् आश्रित्य साधुत्वं वक्तुं शक्यते इति भाति। एवं साधुत्वकथने व्यवहारसौलभ्यं प्रधानं कारणम्।

**१६. ये सन्मार्गेण गच्छन्ति, तेषां सहायं करोति देवः।**

० 'सहायम्'इति अपशब्दः। **'साहाय्यम्'** इति, **'साहायकम्'** इति वा प्रयोक्तव्यम्। सहायशब्दस्य[1] अनुचरः इत्यर्थः। 'अनुप्लवः सहायश्चानुचरोऽभिसरः समाः' इत्यमरकोषः। अन्यच्च स च शब्दः पुंलिङ्गे, न तु नपुंसकलिङ्गे। प्रकृते तु द्रव्यपरेण तेन अर्थेन न किमपि प्रयोजनम्। सहायस्य भावः कर्म वा[2] साहायकम्। 'सहायाद्वा' इति वार्तिकबलात् साहाय्यम् इत्यपि रूपम्। (साहाय्यम् इत्यत्र 'ष्यञ्'प्रत्ययः) एवं च साहाय्यम् इति साहायकम् इति वा प्रयोक्तव्यम्। एतस्मिन् एव अर्थे साह्यम्[3] इत्यपि प्रयोक्तुं शक्यते।

**१७. संस्कृतपाठने तस्य अपूर्वं कौशलम्/कौशल्यम्।**

० **'कौशलम्'** इति रूपं, **'कौशल्यम्'** इति रूपं चापि साधु एव। 'हायनान्तयुवादिभ्योऽण्' इति सूत्रेण (५.१.१३०) अण्प्रत्यये कृते कौशलम् इति रूपम्। 'गुणवचनात् ब्राह्मणादिभ्यः कर्मणि च' इति सूत्रेण (५.१.१२४) ष्यञ्प्रत्यये कृते कौशल्यम् इति रूपम्। 'अण्प्रत्ययः ष्यञ्प्रत्ययः वा न विकल्प्यते। तर्हि कथं रूपद्वयम्?' इति सन्देहः कदाचित् स्यात्। किन्तु कुशलादयः केचन शब्दाः युवादिषु अपि पठ्यन्ते। ब्राह्मणादिषु अपि पठ्यन्ते। एवम् उभयत्र पाठात् रूपद्वयसिद्धिः।

---

1. सह अयते – अय(गतौ) 'अच्'। (३.१.१३४)
2. 'योपधात् गुरूपोत्तमात् वुञ्' (५.१.१३२)
3. 'गुणवचनात् ब्राह्मणादिभ्यः कर्मणि च' (५.१.१२४) इति ष्यञ्।

# चन्दमामा

संस्थापकः– 'चक्रपाणिः' सञ्चालकः– 'नागिरेड्डी'

सद्यः कस्याञ्चित् पत्रिकायां प्रकाशितं हास्यचित्रम् एकं भवद्भिः दृष्टं स्यात्। तस्मिन् चित्रे केचन राजकीयाः नायकाः परीक्षाभवने इव उपविष्टाः दृश्यन्ते। एकैकस्य पुरतः एकैका उत्तरपत्रिका अस्ति। सर्वासु उत्तरपत्रिकासु समानाः शब्दाः लिखिताः सन्ति। चित्रस्य शिरोनाम आसीत्– 'सामूहिकं लेखनचौर्यम्' इति।

एषु दिनेषु प्रवृत्तासु परीक्षासु बहुभिः छात्रैः यत् लेखनचौर्यं निर्लज्जं कृतं तां वार्ताम् आधारीकृत्य एतत् चित्रं लिखितम् आसीत्। परीक्षा केनाऽपि उपायेन उत्तरणीया इति चिन्तयद्भिः छात्रैः लेखनचौर्यं क्रियते। विषयावगतिः ज्ञानप्राप्तिः वा एतेषां लक्ष्यं न भवति। श्रद्धया पठित्वा बुद्धिमत्तायाः बलेन ये उत्तराणि लिखन्ति तेषां विषये महत् अन्याय्यम् आचरन्ति एते धूर्ताः। किन्तु एतादृशैः कृत्यैः किं वा साधितं भवेत्? आत्महानिः एव, नान्यत् किमपि।

प्रसिद्धासु स्पर्धासु स्पर्धिनः भागग्रहणात् पूर्वम् उद्दीपकानि औषधानि सेवन्ते, तद्द्वारा क्षणिकं सामर्थ्यातिशयं प्राप्य विजयिनः भवन्ति इति श्रूयते। अश्वस्पर्धायाम् अश्वः जयं प्राप्नोतु इति उद्देशेन उद्दीपकम् औषधं पाययित्वा अश्वं स्पर्धायां प्रेरयन्ति इत्यपि श्रूयते।

क्षणिकस्य लाभस्य प्राप्त्यर्थं समीपतरं वाममार्गं ये आश्रयन्ति ते कीदृशं फलं प्राप्नुयुः? अचिरात् एव शाश्वतिकम् अयशः। एवं ननु?

सम्पुटः–८ जुलै–१९९१ सञ्चिका–४

प्रतिकृतिमूल्यं रू. ४-०० * वार्षिकं ग्राहकशुल्कं रू. ४८-००






# अखण्डतायाः पुरस्कारः




अध्यक्षेण गोर्बचेव्वर्येण यः प्रश्नः पृष्टः तस्य उत्तररूपेण सोवियत्जनाः उक्तवन्तः यत् 'आम्' इति।

इतः परं तस्मिन् देशे समस्याविषये जनाभिप्रायः साक्षात् जनतातः एव प्राप्यते, न तु जनप्रतिनिधिद्वारा। एवं जनाभिप्रायस्य प्रत्यक्षं सङ्ग्रहार्थं 'रेफरेण्डम्'नामकः कार्यक्रमः आयोज्यते। जनानां पुरतः समस्याम् उपस्थाप्य एतस्याः एतादृशः परिहारोपायः उचितः उत न इति पृच्छ्यते। मतदानद्वारा जनाः स्वाभिप्रायं प्रकटयिष्यन्ति।

अध्यक्षेण गोर्बचेव्वर्येण प्रजानां पुरतः एषः प्रश्नः उपस्थापितः आसीत्– "गणराज्यानां पृथगस्तित्वं स्यात्, उत ते सोवियत् संयुक्तराष्ट्रस्य अङ्गानि स्युः" इति। 'तानि गणराज्यानि सोवियत् संयुक्तराष्ट्रस्य अङ्गानि एव स्युः' इत्येव अधिकसङ्ख्याकानाम् आशयः आसीत्। एवं गोर्बचेव् वर्येण आरब्धया एतया जनमतसङ्ग्रहप्रक्रियया ज्ञातं यत् सोवियत्देशः संयुक्तराष्ट्ररूपेण एव अनुवर्तेत इति प्रजाः इच्छन्ति इति।

इदानीं प्रश्नः उद्भवेत् यत् किमर्थं वा गोर्बचेव्वर्येण प्रजानां पुरतः पूर्वोक्तः प्रश्नः उपस्थापितः? तादृशी का परिस्थितिः आसीत् तत्र इति।

'पेरस्त्रायिका' 'ग्लासनोस्त्' इति नाम्ना गोर्बचेव्वर्येण उदात्ताः परिष्काराः आरब्धाः आसन्। एतस्य परिणामतः अधिकार-विकेन्द्रीकरणं, धार्मिकस्वातन्त्र्यं, पाश्चात्यप्रजाप्रभुत्वपद्धतौ आदरः इत्यादयः जाताः। तथैव अनिरीक्षिताः अन्ये केचन परिणामाः अपि घटिताः। आहारपदार्थानाम् अभावः, अर्थस्फीतिः इत्यादीनां कारणतः कानिचन गणराज्यानि अवदन् यत् वयं सोवियत्संयुक्तराष्ट्रात् पृथग्भवामः इति। एषः पृथग्भाववादः प्रबलः जातः। एतस्य निवारणार्थं सेनायाः उपयोगः अपि कृतः। तथापि समस्या तु न परिहृता। अन्ते गोर्बचेव् निश्चितवान् यत् एतस्याः समस्याः परिहारार्थं जनमतसङ्ग्रहः एव योग्यः उपायः इति।




'रेफरेण्डम्' प्रक्रियाद्वारा जनाः अखण्डताम् एव समर्थितवन्तः। एतस्यां प्रक्रियायां षट् गणराज्यानि भागं न अवहन्। किन्तु नवगणराज्यानां जनाः सोत्साहं भागं गृहीतवन्तः, येषां सङ्ख्या ९०% भवेत्। एवं विशालः जनसमूहः स्वाभिप्रायं प्राकाशयत् यत् सोवियत्देशः संयुक्तराष्ट्ररूपेण एव तिष्ठेत् इति।

एतस्याः 'रेफरेण्डम्'प्रक्रियायाः कारणतः पृथक्त्वं प्रतिपादयतां बलं क्षीणं जातम्। एतावदेव न, सोवियत्जनैः गोर्बचेव्वर्यस्य नायकत्वे परोक्षरूपेण विश्वासः प्रकटितः अभवत् अपि।

एषा घटना, शताधिकजातिजातानां सोवियत्प्रजानां विज्ञतायाः स्वतन्त्रचिन्तन-प्रवृत्तेः च उत्तमम् उदाहरणम्।



# श्वश्रूप्रिया भाग्यवती

बलरामपुरे शिवरामः नाम कश्चित् कुसीदवणिक् निवसति स्म। कदाचित् कार्यार्थं सः नगरं गतः। नगरे त्रिचतुराणि दिनानि स्थातव्यम् आपतितं तेन। 'कुत्र स्थातव्यम्' इति यदा चिन्तनम् आरब्धं तदा झटिति श्यालस्य प्रकाशस्य गृहं स्मृतम्।

प्रकाशः सद्यः विवाहितः अस्ति। पत्न्या सह नगरे निवसति च। प्रकाशस्य गृहस्य सङ्केतं जानाति शिवरामः। अतः तस्य दिनस्य कार्यं समाप्य सायङ्कालसमये सः प्रकाशस्य गृहं प्राप्तवान्। प्रकाशः शिवरामस्य आगमनेन नितरां सन्तुष्टः। "आगच्छतु अन्तः। आवाभ्याम् इदमिदानीं भोजनार्थम् उपविष्टम् आसीत्। भोजनं समाप्य एव वार्तालापं करिष्यामः। पादौ प्रक्षाल्य भोजनार्थम् आगच्छतु तावत्" इति उक्तवान् सः।

हस्तौ पादौ च प्रक्षाल्य पाकशालां प्रविष्टवान् शिवरामः। तत्र तेन स्थालिकात्रये परिविष्टं दृष्टम्। सः आश्चर्येण पृष्टवान्– "मम आगमनं जानन्तौ भवन्तौ अन्यस्यां स्थालिकायां सर्वं परिविष्टवन्तौ वा?" इति।

"तथा न। सा तृतीया स्थालिका मम मातुः निमित्तम्" इति उक्तवान् प्रकाशः।

"भवतः माता तु पञ्चभ्यः वर्षेभ्यः पूर्वम् एव दिवं गता खलु? एवं स्थिते तस्याः निमित्तं परिवेषणं किमर्थम्?" इति आश्चर्येण पृष्टवान् शिवरामः।

"मम माता यद्यपि न दृश्यते, किन्तु सा मम पत्न्या दृश्यते। सा तदा तदा मम पत्नीं मार्गम् उपदिशति अपि" इति उक्तवान् प्रकाशः।

"एवं तर्हि स्थालिकायां परिविष्टं कदा खादति सा?" इति पृष्टवान् शिवरामः।

"आवां भोजनं समाप्य आवरणेन एतां



स्थालिकाम् आवृतां कृत्वा शयनं कुर्वः। प्रातः स्थालिका रिक्ता दृश्यते" इति उक्तवती भाग्यवती।

तदा शिवरामः पृष्टवान्– "एवं तर्हि इदानीम् अहं भोजनं करोमि चेत् भवत्याः श्वश्र्वाः निमित्तं भोजनं न भवेत् खलु?" इति।

"तद्विषये चिन्ता मास्तु। अहं तस्यै पुनः पक्त्वा परिवेषयिष्यामि" इति हसन्ती उक्तवती भाग्यवती।

प्रकाशस्य शिवरामस्य च भोजनम् आरब्धम्। भाग्यवती पुनः अन्नस्य सज्जीकरणे उद्युक्ता। वार्तालापमध्ये प्रकाशः शिवरामम् उक्तवान्– "वस्तुतः तु अहं भाग्यशाली। स्नुषाः जीवन्तीं श्वश्रूं पीडयन्ति इति श्रूयते। श्वश्रूः मृता चेत्, सन्तोषम् अनुभवन्ति स्नुषाः। एवं स्थिते मम पत्नी अदृश्यरूपिण्याः श्वश्र्वाः निमित्तं श्रद्धया पुनः पचति। एतां पत्नीत्वेन प्राप्तवान् अहं भाग्यवान् एव खलु?" इति। अङ्गीकारपूर्वकं शिरः चालितवान् शिवरामः।

यथासमयं सर्वे निद्रां कृतवन्तः। शिवरामः उषःकाले एव उत्थितवान्। मन्दम् उत्थाय पाकशालां गत्वा स्थालिकां परिशीलितवान् च। स्थालिका रिक्ता आसीत्।

तस्मिन् दिने कार्यार्थं बहिः गतः शिवरामः सायं प्रत्यागच्छन् आसीत्। तावता पत्न्या सह कुत्रापि प्रस्थितः प्रकाशः मार्गे मिलितः। सः शिवरामम् उक्तवान्– "गृहस्य कुञ्चिका प्रतिवेशिगृहे दत्ता अस्ति। ततः तां स्वीकरोतु। इदानीं भवतः समीपे यदि चतुश्शतं रूप्यकाणि स्युः तर्हि ददातु कृपया। वेतनं यदा प्राप्यते तदा प्रत्यर्पयिष्यामि" इति।

शिवरामः उत्तरं किमपि अवदन् चतुश्शतं रूप्यकाणि प्रकाशाय दत्तवान्।

रात्रौ किञ्चित् विलम्बेन प्रकाशः भाग्यवती च आगतवन्तौ। भाग्यवत्याः हस्ते नूतना शाटिका आसीत्।

भाग्यवती शाटिकां स्वीकृत्य आसन्दस्य समीपं गतवती। तत्र उपविष्टवतीं श्वश्रूम् उद्दिश्य इव उक्तवती– "अम्ब! भवत्या यथा सूचितं तथा नीलदशोपेता शाटिका

क्रीता। भवत्याः पुत्रः एव एतां शाटिकां चितवान्। भवत्यै एषा अरोचत वा?" इति। अनन्तरं समग्रां शाटिकां प्रसारितवती। ततः पतिं पश्यन्ती– "श्वश्र्वा उक्तं ज्ञातं वा? सा वदति यत् या धरति तस्यै एतत् इष्टकरं जातं चेत् ममापि इष्टकरम् एव इति। वत्सला श्वश्रूः मम" इति उक्तवती।

प्रकाशः तृप्त्या शिरः चालितवान्। ततः अल्पे एव काले पाकः सिद्धः। प्रकाशः शिवरामः च भोजनार्थम् उपविष्टवन्तौ। श्वश्र्वाः निमित्तम् अपि 'परिविष्टवती आसीत् भाग्यवती। भोजनसमये सा श्वश्र्वाः स्थालिकां पश्यन्ती आश्चर्यं प्रकटयन्ती– "किम् उक्तम्? भवत्याः जामाता वक्तव्यः यत् गच्छतु इति? कथं शक्येत एतत्? सः अस्माकम् अतिथिः खलु?" इति उक्तवती।

तदा प्रकाशः आश्चर्यं प्रकटयन् पत्नीं पृष्टवान्– "किम् उक्तवती मम माता?" इति।

"श्वश्रूः पुत्रीं स्मृतवती इति भाति। पुत्री गृहे एकाकिनी खलु? एकाकिन्याः पुत्र्याः खेदं माता कथं वा सहेत? सा सूचयति यत्– मम जामातरं शीघ्रं गृहं प्रेषयन्तु इति" इति उक्तवती भाग्यवती।

तदा शिवरामः हसन्– "एवं वा? भवती श्वश्रूं वदतु यत् अहं परश्वः गृहं प्रतिगमिष्यामि इति। श्वः मम कार्यं समाप्तं भवेत्" इति उक्तवान्।

तास्यां रात्रौ दीर्घकालं यावत् शिवरामेण निद्रा न प्राप्ता। मध्यरात्रे सः जलपानार्थं





पाकशालां गतवान्। तदा तेन दृष्टं यत् भाग्यवती पुरतः अल्पं दीपं स्थापयित्वा श्वश्र्वाः निमित्तं स्थापितायां स्थालिकायां स्थितानि अन्नादीनि वेगेन खादन्ती अस्ति। शिवरामः विना शब्दं प्रतिगृत्य शयनं कृतवान्।

अनन्तरदिने कार्यं समाप्य प्रत्यागतवान् शिवरामः। प्रकाशः शिवरामः च भोजनार्थम् उपविष्टवन्तौ। तावता शिवरामः झटिति उत्थाय द्वारं पश्यन्– "आगच्छतु श्रीमन्, आगच्छतु" इति स्वागतवचनानि उक्तवान्।

एतत् दृष्ट्वा प्रकाशः आश्चर्येण पृष्टवान्– "कम् आह्वयति भवान्? कोऽपि न दृश्यते खलु?" इति।

"न दृश्यते वा? षड्भ्यः वर्षेभ्यः पूर्वं दिवङ्गतः भवतः पिता उपस्थितः अस्ति। मया तु स्फुटं दृश्यते। भगिनि, श्वशुरस्य निमित्तम् अपरां स्थालिकां स्थापयतु तावत्" इति उक्तवान् शिवरामः।

भाग्यवती आश्चर्यम् अनुभवन्ती अन्यां स्थालिकाम् आनीय स्थापितवती। तावता शिवरामः पुनः पृष्टवान्– "किं श्रीमन्? भोजनं न क्रियते वा? भोजनं समाप्य एव आगतं वा? चिरात् आगमनं खलु भवतः? कः विशेषः?" इति।

किमपि शृण्वन् इव शिवरामः मध्ये मध्ये शिरः चालयति। 'आम्' 'एवं वा?' इत्यादिकं वदति च।

तदा कुतूहलातिशयेन प्रकाशः शिवरामं पृष्टवान्– "मम पिता किं वदति भोः?" इति।

"भवतः पिता वदति यत् अहं मम पत्नीं नेतुम् आगतवान् अस्मि। इतः परम् अस्माभिः उपरितनः लोकः गम्यते इति। भाग्यवत्या भवता वा दुःखं न अनुभोक्तव्यम् इत्यपि वदति सः। भवन्तौ सान्त्वनीयौ इति उक्त्वा पत्न्या सह गतः सः" इति उक्तवान् शिवरामः।

"मद्विषये मम पितुः प्रीतिः एतावती एव वा? मातरम् अपि किमर्थं नयति सः?" इति खेदेन उक्तवान् म्लानवदनः प्रकाशः।

"अन्यलोकं प्रति गमनं तयोः अनिवार्यम् आसीत्। सर्वं दैवाधीनं खलु?" इति उक्तवान्

शिवरामः।

अनन्तरदिने प्रातः एव स्वग्रामं प्रति गतवान् शिवरामः। शिवरामस्य शय्यां पुटीकर्तुं गतया भाग्यवत्या तत्र किञ्चन पत्रं प्राप्तम्। कुतूहलेन पत्रम् उद्घाट्य पठितवती भाग्यवती। पत्रे एवं लिखितम् आसीत्– "भगिनि, पत्युः सरलतां मुग्धतां मातृविषयिणीं प्रीतिं च दृष्ट्वा भवती उपायेन परिस्थितेः दुरुपयोगं कुर्वती अस्ति। जिह्वाचापल्यं निरोद्धुम् अशक्नुवती भवती श्वश्रूदर्शनं निरूपयन्ती रात्रौ स्वयं खादति। विलासप्रियतायाः निमित्तं पतिम् ऋणस्वीकारे अपि निस्सङ्कोचं प्रेरयति। गृहम् आगतम् अतिथिं द्वितीये दिने एव प्रेषयितुम् अपि उपायं कृतवती। भवत्याः श्वश्रूप्रियता कपटता च मया सम्यक् अवगता। अतः एव अहं श्वशुरस्य आगमनं कल्पितवान्। इतःपरं वा एतादृशीं कपटतां परित्यज्य ऋजुमार्गेण जीवतु। विलासप्रियतां परित्यज्य यावान् आयः तावता एव जीवननिर्वहणं करोतु। अहं भवत्याः श्रेयोभिलाषी। अतः भवत्याः कपटतां कुत्रापि न प्रकटितवान्। विवेकिनी गुणवती च खलु भवती। दोषः कदाचित् क्रियते। दोषपरिहारः सद्व्यवहारेण एव। मयि कोपः मास्तु। भवती आगामिनि पर्वदिने पत्या सह मम गृहम् आगच्छतु। भवती आगता चेदेव अहं भावयामि यत् मयि भवत्याः कोपः नास्ति इति" इति।

पत्रस्थस्य विषस्य चिन्तनं कुर्वती आसीत् भाग्यवती। तावता तत्र आगतः प्रकाशः पृष्टवान्– "किं सुदीर्घं चिन्तयन्ती अस्ति? श्वश्रूः इतः परम् अत्र न आगमिष्यति इति खेदः वा?" इति।

"तत् न। परलोकगमनम् अनिवार्यम् आसीत्। अतः गता सा। गृहम् आगताय आवुत्ताय अस्माभिः उपायनं किमपि न दत्तं खलु? अतः आगामिपर्वदिने आवां बलरामपुरं गत्वा उपायनं दत्त्वा आगच्छाम। अस्तु वा?" इति पृष्टवती भाग्यवती।

"अवश्यं भवतु" इति उक्तवान् प्रकाशः।



# महामूर्खः

हालकः कश्चन निर्धनः काष्ठविक्रयिकः। कदाचित् सः नद्यां जलं पीत्वा यदा प्रतिगच्छन् आसीत् तदा तेन सिकतासु प्रकाशमानं किमपि वस्तु दृष्टम्। सः तत् हस्तेन स्वीकृत्य परिशीलयन् आसीत्।

तावता तेन मार्गेण गच्छन् स्वर्णकारः हालकसमीपम् आगत्य तत् वस्तु परीक्ष्य उक्तवान्– "एतं प्रकाशमानं काचकखण्डं मह्यं ददातु। अहं भवते विंशतिं रूप्यकाणि ददामि" इति।

एतत् श्रुत्वा हालकः चिन्तितवान् यत् एषः काचकखण्डः उपयोगयोग्यः स्यात्, अत एव एषः एतं क्रेतुम् उद्युक्तः अस्ति इति। अतः सः स्वर्णकारम् उक्तवान्– "नैव, तेन मूल्येन न ददामि। त्रिंशत् रूप्यकाणि ददातु, एतत् ददामि" इति।

"अये मूर्ख! सामान्याय काचकखण्डाय को वा त्रिंशत् रूप्यकाणि दद्यात्? विवादः मास्तु, पञ्चविंशतिं रूप्यकाणि स्वीकरोतु" इति उक्तवान् स्वर्णकारः।

किन्तु हालकः वदति यत् त्रिंशत् रूप्यकाणि दातव्यानि एव इति। "एकं रूप्यकं न्यूनं दत्तं चेदपि अहं न अङ्गीकरोमि" इति वदति सः।

'एतस्मिन् निर्जने अरण्ये अन्यः क्रेता न लभ्यते' इति आलोच्य स्वर्णकारः– "भोः, पश्यतु। अत्याशा आत्मनाशाय। अहं समीपस्थं ग्रामं गत्वा एकघण्टाभ्यन्तरे प्रत्यागमिष्यामि। पञ्चविंशतिरूप्यकेभ्यः अधिकं तु न ददामि। अन्यः तु दश रूप्यकाणि अपि न दद्यात्" इति उक्त्वा ततः निर्गतवान्।

एकघण्टानन्तरं स्वर्णकारः प्रत्यागत्य हालकम् उक्तवान्– "किं चिन्तितं भवता? पञ्चविंशतिं रूप्यकाणि स्वीकृत्य काचकखण्डं ददातु तावत्" इति।

"तं च अहं शतरूप्यकैः विक्रीतवान्" इति उक्तवान् हालकः। एतत् श्रुत्वा आश्चर्यचकितः स्वर्णकारः क्षणकालस्य मौनस्य अनन्तरम् उक्तवान्– "मूर्खः भवान्। तत् तु वज्रम् आसीत्। दशसहस्राधिकरूप्यकमूल्यकं तत्" इति।

तदा हालकः उक्तवान्– "अहं तु तस्य मूल्यम् अजानन् कश्चन सामान्यः। भवान् तु तत् वज्रम् इति जानन् अपि पञ्च रूप्यकाणि सञ्चेतुम् इच्छन् वज्रात् वञ्चितः अभवत्। एवं तर्हि भवान् महामूर्खः सञ्जातः" इति।





# अपूर्वस्य साहसगाथा

## ३

(सत्यानन्दमुनिः स्वस्य तपसः बलेन यज्ञद्वारा अपूर्वशक्तिमन्तम् अपूर्वं सृष्टवान्। स च अपूर्वः जनोपकारकः। ग्रामज्वालने मग्नान् भूस्वामिसेवकान् दूरं सम्प्रेष्य निर्धनान् रक्षितवान् सः। बलिसमर्पणार्थं चोरैः नीतं समीरनामकं बालकं रक्षितवान्, तं तदीयं ग्रामं प्रापितवान् च। तदनन्तरम्.....)

सकुशलं प्रत्यागच्छन्तं समीरं दूरात् एव दृष्ट्वा महता सन्तोषेण ग्रामीणाः धावन्तः तस्य समीपम् आगतवन्तः।

बालकस्य कस्यचित् आगमनं, जनानां धावनं, तेषां मुखे सन्तोषं च दृष्ट्वा आश्चर्यम् अनुभवन् दलपतिः 'किम् एतत्?' इति स्वगतं वदन् गमनं स्थगितवान्।

समीरस्य माता– "वत्स! आगतः खलु भवान्! देवः दयालुः" इति वदन्ती पुत्रं दृढम् आलिङ्ग्य आनन्दाश्रूणि स्रावितवती।

ग्रामाधिकारी समीरस्य समीपम् आगत्य सन्तोषं प्रकटयन्– "धीरः भवान्। चोरैः गृहीतः अपि भवान् अल्पं क्षतम् अपि अप्राप्य सकुशलं प्रत्यागतः। श्लाघनीयः प्रयत्नः भवतः" इति उक्तवान्।

"आम्। धीरः समीरः" इति वदन्तः अन्ये ग्रामीणाः शिरः चालितवन्तः।

किन्तु समीरः विनयेन सर्वान् नमस्कृत्य



आकाशं पश्यन् नमस्कारं कृत्वा उक्तवान्– "अद्य मृत्युमुखात् अहं प्रत्यागतः यत् तत्र नाहं कारणं, न मम धैर्य-साहस-बुद्धिमत्तादयः। सः भगवान् एव दिव्यं पुरुषं कञ्चित् सम्प्रेष्य तद्द्वारा मां रक्षितवान्। अद्य अहं कथमपि सजीवं प्रत्यागतः। किन्तु किं तेन? इतः पूर्वं तैः यथा बहवः नीताः, बलिरूपेण समर्पिताश्च तथैव इतः परम् अपि प्रचलिष्यति। अतः मम एकस्य सजीवं प्रत्यागमनं न सन्तोषस्य विषयः" इति।

"स्यात् नाम तथा। तथापि चोराणां बन्धनात् विमोचनं प्राप्य भवान् प्रत्यागतः इत्येतत् न सामान्यः विषयः। किं करवाम! तान् दुष्टान् चोरान् निवारयितुम् अस्माकं सामर्थ्यं नास्ति। महाराजस्य शूराः सैनिकाः अपि एतद्विषये असमर्थाः इति चेत् का कथा अस्माकम्? सर्वं मौनं सोढव्यम्। न अन्या गतिः" इति खेदेन उक्तवान् ग्रामाधिकारी।

तदा समीरः गम्भीरस्वरेण उक्तवान्– "मद्द्वारा किमपि महत् कार्यं सम्भविष्यति इति तेन देवदूतेन उक्तम्। एतेषां दुष्टानाम् अन्त्यकालः सन्निहितः इति भावयन्तु। सर्वस्य अपि कश्चन अन्त्यकालः भवेत् एव खलु? महाराजस्य सैनिकाः सौभाग्यवशात् अत्रैव आगताः सन्ति। ते यदि मया सह आगच्छेयुः तर्हि चोराणां बन्धनार्थं मार्गं प्रदर्शयिष्यामि अहम्। एतत्कार्यम् अद्यैव स्यात्। विलम्बः कृतः चेत् कार्यं न सिध्येत्" इति।

एतत् श्रुत्वा तत्रत्याः सर्वे आश्चर्यातिरेकेण समीरं पश्यन्ति। दलनायकः तु– 'एतस्य बुद्धिः भ्रष्टा स्यात् वा?' इति चिन्तयन् तीक्ष्णया दृष्ट्या समीरं पश्यति। किन्तु ग्रामाधिकारिणः तु समीरे प्रबलः विश्वासः। सः समीरस्य हस्तं स्वहस्तेन प्रीत्या गृहीत्वा– "ते चोराः कुत्र भवन्ति इति भवान् सम्यक् जानाति वा? वयं सर्वे गच्छामः चेत् चोराः ततः पलायनं कुर्युः, आक्रमणं वा कुर्युः। एवं किल?" इति उक्तवान्।

तदा दलपतिः ग्रामाधिकारिणम् उक्तवान्– "चोराः तत्रैव भवन्ति इति



चिन्तयाम चेदपि केचन एव सैनिकाः तान् क्रूरान् ग्रहीतुं नार्हति। अन्यच्च अयं च बालः। एतस्य वचने विश्वस्य गमनेन सैनिकानां प्राणहानिः जाता चेत् राजा मां सम्यक् निन्देत्" इति।

"अत्र न कोऽपि अपायः। चोराः सर्वे गुहायां मूर्च्छया पतिताः सन्ति। अद्य सायङ्कालात् पूर्वं ते जागरिताः न भवेयुः। अतः तेषां ग्रहणं सुलभम्। मां यः रक्षितवान् सः देवदूतः एव उपायेन तान् मूर्च्छितान् कृतवान्" इति उक्तवान् समीरः।

'एवं वा?' इति आश्चर्येण उक्तवान् दलपतिः। तस्य मुखं विकसितं जातम्। सः सैनिकान् आज्ञापितवान् यत् गमनार्थं सिद्धाः भवन्तु, माम् अनुसरन्तु इति।

"वत्स! समीर! ह्यः आरभ्य भवता किमपि न खादितं स्यात्। बुभुक्षया श्रान्तः स्यात् भवान्। अतः किमपि किञ्चित् खादित्वा गच्छतु" इति प्रीत्या उक्तवती समीरस्य माता।

"अम्ब! कार्यं समाप्य एव किमपि खादिष्यामि। अल्पः विलम्बः अपि कदाचित् कार्यनाशकः भवेत्। महाराजसैनिकाः अत्र उपस्थिताः सन्ति इति तु महते सौभाग्याय। अतः अविलम्बेन गमनं वरम्" इति उक्त्वा ततः प्रस्थितवान् समीरः।

दलपतिः समीरम् अनुसृतवान्। सैनिकाः दलपतिम् अनुसृतवन्तः। दृढकायाः धीराः केचन युवकाः अपि कुतूहलेन तान् अनुसृतवन्तः। ग्रामीणानां हस्ते लवित्र-दण्ड-धनुर्बाणादयः आसन्।

सर्वे उत्साहेन पर्वतसमीपं गतवन्तः। यदा चोराणां वसतिः आसन्ना तदा समीरः सर्वान् तत्रैव मौनं स्थातुम् उक्त्वा स्वयं पर्वतशिखराग्रं गत्वा खाते दृष्टिं प्रसारितवान्। गुहामुखसमीपे मूर्च्छायाम् एव स्थिताः चोराः दृष्टाः तेन।

समीरः मन्दहासं प्रकटयन् हस्तम् इतस्ततः चालयन् दलपतिं ग्रामाधिकारिणं च सूचितवान् यत् सर्वे उपरि आगच्छन्तु इति।

ग्रामाधिकारी दलपतिः अन्ये च उत्साहेन समीरसमीपम् आगतवन्तः। ततः ते सर्वे



निर्दयम् आकृष्य नयामः। महाराजस्य पुरतः भवतः शिरः स्थापयिष्यामः। प्राणाः यदि प्रियाः स्युः तर्हि विधेयतया व्यवहरतु'' इति कोपेन गर्जितवान् दलपतिः।

भैरवमल्लः परितः दृष्ट्वा सर्वे अनुचराः अपि बद्धाः सन्ति इति ज्ञात्वा दन्तैः लतां छेत्तुं प्रयत्नं कृतवान्। तदा दलपतिः मुष्ट्या तस्य मुखे तीव्रं प्रहृत्य– ''दुष्ट! पुनः प्रहृतं चेत् दन्ताः सर्वे उदरं प्रविशेयुः। व्यर्थः साहसप्रयत्नः मास्तु। वयं यथा आदिशामः तथा आचरतु'' इति उक्तवान्।

तावता अन्ये चोरानुचराः अपि सचेतनाः जाताः। 'वयं सर्वे भटैः बद्धाः स्मः' इति ज्ञातवन्तः ते। भटानां हस्ते स्थितानां कशानां दर्शनात् तेषां प्रतिरोधोत्साहः सर्वथा शान्तः।

चोरैः सह ततः प्रस्थितवान् दलपतिः। एकैकस्य चोरस्य पार्श्वे उभौ सैनिकौ स्तः। समीरः ग्रामाधिकारी च अग्रे प्रस्थितवन्तौ।

ते सर्वे समीरस्य ग्रामम् आगतवन्तः। तावता एतां वार्तां श्रुत्वा समीपस्थेभ्यः ग्रामेभ्यः अपि आगताः जनाः तत्र सम्मिलिताः आसन्। चोराः शिरः अवनमय्य स्थिताः सन्ति। चोरैः पूर्वं याः पीडाः दत्ताः ताः स्मरन्तः केचन क्रोधेन चोरान् ताडयितुम् उद्युक्ताः। तदा तान् तस्मात् प्रयत्नात् निवारयन् समीरः उक्तवान्– ''अलं ताडनेन। चोराः तु बद्धाः सन्ति। महाराजः एतान् योग्येन दण्डेन दण्डयिष्यति।

गुहासमीपम् आगतवन्तः। दलपतेः आज्ञानुसारं सैनिकाः वृक्षेषु संलग्नाः दृढाः लताः कर्तयित्वा आनीय चोराणां हस्तान् बद्धवन्तः।

सर्वप्रथमं सचेतनः जातः भैरवमल्लः एव। यदा तेन नेत्रे उन्मीलिते तदा खड्गहस्तः दलपतिः पार्श्वे दृष्टः। अहं कुत्र कस्यां स्थितौ अस्मि इति भीत्या परिशीलयति भैरवमल्लः। तस्य मुखे क्रोधः दृश्यते।

''अये दुष्ट! समाप्ता भवतः कथा। इदानीम् अस्माकं बन्दी भवान्। अस्माकं बन्धनतः विमोचनं सर्वथा असाध्यम् इति स्मरतु। वयं यथा आदिशामः तथा आचरतु। अन्यथा शिलाकण्टकमये मार्गे भवन्तं

दण्डनाधिकारः महाराजस्य एव, न तु अस्माकम्। पूर्वम् एतेभ्यः याः पीडाः अनुभूताः ताः महाराजं विस्तरेण निवेदयन्तु। तावता अलम्। महाराजः एव यथायोग्यं करिष्यति" इति।

ग्रामीणाः– 'समीरः जयतु' इति पुनः पुनः उच्चैः वदन्तः जयघोषं कृतवन्तः। समीरं स्कन्धे आरोप्य नृत्यं कृतवन्तः केचन।

परमसन्तुष्टः ग्रामाधिकारी उपस्थितेभ्यः सर्वेभ्यः भोजनकूटं व्यवस्थापितवान्।

भोजनानन्तरं सर्वे इतस्ततः सञ्चरन्तः आसन्। समीरः छायायुक्तस्य कस्यचित् वृक्षस्य अधः स्थितः आसीत्। तावता अनतिदूरे एव शीष्कारध्वनिः श्रुतः। समीरः परिवृत्य दृष्टवान्। गुल्मस्य कस्यचित् पृष्ठतः स्थितः अस्ति अपूर्वः।

'जनानां पुरतः आत्मानं प्रकटयितुम् अनिच्छन् अपूर्वः किमपि सूचयितुं मां स्वसमीपम् आह्वयन् अस्ति' इति जानन्, अपूर्वस्य दर्शनात् जातं सन्तोषं मुखे अप्रकटयन् सञ्चारार्थं गच्छन् इव गुल्मस्य समीपं गतवान् समीरः। "श्रीमन्! भवतः दर्शनात् महान्तं सन्तोषम् अनुभवन् अस्मि" इति मन्दस्वरेण अपूर्वम् उक्तवान् सः।

"समीर! भवतः दर्शनात् ममापि सन्तोषः एव। चोराणां ग्रहणे भवता यत् कौशलं प्रदर्शितं तत् श्लाघ्यम्। एते चोराः दुष्टाः स्युः चेदपि मानवाः एव किल? अतः एतेभ्यः अपि



आहारः दातव्यः इति ग्रामाधिकारिणं सूचयतु। एतत् स्मारयितुम् एव अहम् अत्र आगतः" इति उक्तवान् अपूर्वः।

"यथा भवतः आदेशः तथा करिष्यामि भगवन्!" इति विनयेन उक्तवान् समीरः।

"भगवन् इति मास्तु, मित्र इति सम्बोधयतु। तावता अलम्" इति हसन् उक्त्वा अपूर्वः ततः निर्गतवान्।

* * * *

दलनायकः चोरान् सर्वान् राजधानीं नीत्वा राज्ञः पुरतः उपस्थापितवान्। ग्रामीणाः बहवः आगत्य चोरैः दत्ताः पीडाः विस्तरेण निवेदितवन्तः। राजा तेषां शूलारोपणं विहितवान्। चोराः सर्वे कारागारे स्थापिताः। तेभ्यः अल्पः आहारः दीयते स्म प्रतिदिनम्।



'अस्माकम् एतादृश्याः दुर्गतेः कारणं भैरवमल्लः एव' इति अनुचराणां चोराणाम् आशयः। अतः ते भैरवमल्लं क्रोधातिशयेन पश्यन्ति।

"अये भैरव! भवत्कारणतः अस्माकम् एतादृशी गतिः" इति क्रोधेन भैरवमल्लम् उद्दिश्य उक्तवान् कश्चन चोरः।

"अये! मां नाम्ना सम्बोध्य निन्दति वा भवान्? एतावत् औद्धत्यं वा भवतः? अहम् अस्मि भवतां नायकः भैरवमल्लः। एतावत्पर्यन्तं प्रभो इति सम्बोधयन् भवान् अद्य मां नाम्ना आह्वयन् अस्ति वा? जिह्वां विदारयेयम्। जागरूकः भवतु" इति उक्तवान् भैरवमल्लः।

"वृथा आटोपः भवतः। अस्माकं सर्वेषां मरणस्य कारणं भवान् एव। भवान् आदरेण दृष्टः यत् तस्य फलम् एतत्" इति विषादयुक्तेन स्वरेण उक्तवान् अन्यः चोरः।

"रे उद्धत! मुखं पिदधातु रे! अन्यथा यमसदनं प्रेषयिष्यामि" इति क्रोधेन उक्तवान् भैरवमल्लः।

"तत्कार्यं राजभटाः करिष्यन्ति। भवतः अपि एषा एव गतिः। मरणं विना नान्यत् शरणम्" इति खेदेन उक्तवान् सः अनुयायिचोरः।

एतादृशं विरोधं सोढुम् अशक्नुवन् भैरवमल्लः फूत्करोति। किन्तु दन्तरहितः सर्पः सः। तस्य कोपः आदेशः वा अकिञ्चित्करः इदानीम्।

"भवन्तः शूलारोपणात् आत्मानं रक्षितुम् इच्छन्ति वा?" इति कश्चन प्रश्नः कस्माच्चित् कोणात् आगतः।

आश्चर्यचकिताः सर्वे चोराः अन्धकारमयं तं कोणं पश्यन्ति। "कः सः तत्र?" इति पृष्टवान् भैरवमल्लः।

"यः भवतां बन्धनस्य कारणं स एव अहम्" इति उत्तरम् आगतम्।

"अस्माकं बन्धनं कारितवान् भवान् इदानीं किमर्थं विमोचनप्रस्तावं करोति?" इति पृष्टवान् भैरवमल्लः।

"भवद्भिः चौर्यलुण्ठनादिकं निन्द्यं कार्यं क्रियमाणम् आसीत्। अतः बन्धनं कारितवान्। किन्तु अपराधस्य मरणम् एव

परिहारः इति न भावयामि अहम्। कृतस्य कृत्यस्य निमित्तं पश्चात्तापः अनुभूयते चेत्, सन्मार्गे गमनार्थं दृढसङ्कल्पः क्रियते चेत् क्षमां दापयितुं शक्येत। सन्मार्गेण गमनं भवद्भ्यः रोचते चेत् वदन्तु। तदा भवतः सर्वान् राजा यथा क्षाम्येत् तथा करिष्यामि'' इति वचनं तस्मात् कोणात् आगतम्। एवं कथयिता अपूर्वः एव, नान्यः।

क्षणकालस्य मौनस्य अनन्तरं चोराः एकस्वरेण उक्तवन्तः– ''महात्मन्! क्षमया यदि वयम् अनुगृहीताः स्याम तर्हि सन्मार्गेण गमिष्यामः इति प्रतिज्ञां करिष्यामः। भवतः वचनं पालयिष्यामः'' इति।

''भैरवमल्ल! एतद्विषये भवतः आशयः कः?'' इति पृष्टवान् अपूर्वः।

''मया अपि पूर्वं कदाचित् सन्मार्गेण गमनं निश्चितम् आसीत्। किन्तु दारिद्र्यात् धनलोभाच्च चौर्यमार्गः आश्रितः। 'विवेकभ्रष्टानां भवति विनिपातः शतमुखः' इति वचनं सत्यम् एव। अहं पापगर्ते पतितः। पापाचरणम् एव मम वृत्तिः जाता। धनलोभेन वञ्चनया च अन्यान् अपि अहं पापगर्ते पातितवान्। एतादृशं मां को वा क्षाम्यति?'' इति विषादयुक्तेन स्वरेण उक्तवान् भैरवमल्लः।

''कः क्षाम्यति इति चिन्ता मास्तु भवतः। कृतस्य अकार्यस्य विषये पश्चात्तापः तु अनुभूयते खलु? धर्ममार्गानुसरणं क्षेमाय इति



भासते खलु?'' इति उक्तवान् अपूर्वः।

''अनुचरैः अपि धिक्क्रियमाणस्य मम हृदयं पश्चात्तापेन नितरां दग्धम् अस्ति। किन्तु किं तेन? मत्कारणतः एते अनुचराः पापगर्ते पतिताः। अतः राजा यदि एतान् क्षमया अनुगृह्णीयात् तर्हि अहं धन्यः भवेयम्'' इति उक्तवान् भैरवमल्लः।

''मित्राणि! अलं चिन्तया। भैरवमल्ल! अलं विषादेन। भवन्तः पश्चात्तापम् अनुभवन्तः सन्ति इत्यत्र दृढः विश्वासः मम। भवन्तः भगवन्नाम जपन्तः सच्चिन्तनं कुर्वन्तु। शरणागतरक्षकः भगवान् भवतः सर्वान् रक्षिष्यति'' इति उक्त्वा ततः निर्गतवान् अपूर्वः।

* * * *

"चोराः सर्वे पश्चात्तापेन दग्धाः सन्ति। अतः ते भवता क्षन्तव्याः इति मां रक्षितवान् देवदूतः मद्द्वारा वार्ता प्रेषितवान् अस्ति। अतः चोराः क्षन्तव्याः भवता" इति राजानं प्रार्थितवान् समीरः।

किन्तु राजा एतं प्रस्तावं निराकुर्वन् उक्तवान्– "कथं चोराः क्षन्तुं शक्याः? असङ्ख्याकाः जनाः पीडिताः तैः। बहवः निरपराधिनः मारिताः च। एतादृशानां कृते शूलारोपणम् एव उचितः दण्डः" इति।

"प्रभो! पश्चात्तापेन दग्धान् परमात्मा अपि क्षाम्यति" इति उक्तवान् समीरः।

"अये उद्धतबाल! परमात्मनः प्रतिनिधिः इव माम् उपदिशन् अस्ति किल? एतद्विषये बालकस्य भवतः उपदेशः न आवश्यकः" इति उक्तवान् राजा।

"अहं भगवतः प्रतिनिधिः न। यः मां रक्षितवान् सः देवदूतसदृशः दिव्यः पुरुषः मद्द्वारा एवं वार्तां प्रेषितवान् अस्ति" इति विनयेन उक्तवान् समीरः।

"सः दिव्यः पुरुषः यदि एतान् रक्षितुम् इच्छेत् तर्हि स्वसामर्थ्यबलेन अपूर्वं कृत्यं कृत्वा एतान् रक्षितुम् अर्हति खलु? भवद्द्वारा वार्तायाः प्रेषणस्य आवश्यकता का?" इति पृष्टवान् राजा।

"क्रूराः चोराः पश्चात्तापम् अनुभवन्तः सन्ति यत् तदेव तस्य दिव्यपुरुषस्य महत् कृत्यम्" इति उक्तवान् समीरः।

"एतेषां रक्षणं यदि भगवतः प्रियं स्यात् तर्हि भगवान् एव उद्बन्धकरज्जुच्छेदन-पूर्वकम्, अन्येन प्रकारेण वा एतान् रक्षिष्यति एव। यदि प्रियं न स्यात् तर्हि कथमपि प्राणान् हरिष्यति सः। अतः यत् उचितं तत् भगवान् एव करोतु" इति उक्तवान् राजा।

समीरः खेदेन ततः प्रतिनिवृत्य अपूर्वं दृष्ट्वा प्रवृत्तं समग्रं निवेदितवान्।

"भगवता क्रियमाणं द्रष्टव्यम् इति यत् राजा इच्छति तत् सम्भविष्यति एव। चिन्ता मास्तु भवतः" इति समीरम् उक्तवान् अपूर्वः। —(अनुवर्तते)






# कार्यकुशलः

एतावता एकवारम् अपि उत्तरकथने अहम् असमर्थः न जातः इत्यतः श्रेष्ठत्वं मम एव इति चिन्तयन् इव त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान्। वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान्। अनन्तरं यथापूर्वं मौनं श्मशानाभिमुखं प्रस्थितवान् च। तदा शवान्तर्गतः वेतालः अवदत्– "राजन्! फलप्राप्तिं विना न प्रतिगच्छामि इति निश्चितवतः भवतः कार्यशीलता श्लाघ्या एव। किन्तु दैवं यावत् आनुकूल्यं न कल्पयति तावत् फलप्राप्तिः कथम्? पूर्वं केशवसेनः नाम गूढचरः दैवविरोधकारणतः सम्माननात् वञ्चितः अभवत्। भवतः मार्गायासस्य परिहारार्थं तस्य कथां श्रावयामि। श्रद्धया शृणोतु तावत्" इति।

अनन्तरं वेतालेन कथा आरब्धा–

पूर्वं गिरिपुरनामकं राज्यं धूमकेतुः नाम

## वेतालकथा



राजा पालयन् आसीत्। धूमकेतुः स्वभावेन क्रूरः। राज्यविस्ताराकाङ्क्षी अपि।

काम्बोजदेशः गिरिपुरस्य पार्श्वे अस्ति। तस्य धनधान्यसमृद्धिः अधिका। तस्य सेनासामर्थ्यम् अपि अधिकम्। काम्बोजदेशः वशीकरणीयः इति धूमकेतोः इच्छा। साक्षात् युद्धे काम्बोजदेशः वशीकर्तुं न शक्यः इति जानन् धूमकेतुः उपायान्तरेण स च देशः वशीकरणीयः' इति चिन्तयन् अस्ति।

काम्बोजराजस्य पुत्री मदालसा। सा कदाचित् सखीभिः सह वनविहारार्थम् अरण्यम् आगतवती। गुप्तचरद्वारा मदालसायाः आगमनं ज्ञातवान् धूमकेतुः। सः समर्थैः कैश्चित् भटैः सह गत्वा हठात् आक्रमणं कृत्वा मदालसां बद्ध्वा आनीय रहस्यस्थाने सुरक्षितं स्थापितवान्।

अनन्तरं दूतद्वारा काम्बोजराजं प्रति वार्ता प्रेषितवान्– "भवतः पुत्री मदालसा इदानीं मदधीना अस्ति। दश लक्षं सुवर्णमुद्राः समर्प्यन्ते चेत् तां सकुशलं प्रतिप्रेषयिष्यामः। यदि 'गिरिपुरं लघु' इति मत्वा आक्रमणं क्रियेत तर्हि भवता पुत्र्याः शवः दृश्यते" इति।

धूमकेतुना प्रेषितः दूतः काम्बोजं गत्वा एतं सन्देशं वृद्धं मन्त्रिणं निवेदितवान्। वृद्धः मन्त्री दूतेन सह राजसमीपं गत्वा धूमकेतोः सन्देशं निवेद्य तं दूतम् उक्तवान्– "भवान् इदानीं गच्छतु। मासाभ्यन्तरे धनं समग्रं समर्पयिष्यते इति भवद्राजं निवेदयतु" इति। दूतः ततः प्रतिगतवान्।

दूतस्य निर्गमनस्य अनन्तरं काम्बोजराजः कोपमिश्रितेन स्वरेण वृद्धमन्त्रिणम् उक्तवान्– "मन्त्रिवर्य! धनं प्राप्य अपि दुष्टः धूमकेतुः मम पुत्रीं सकुशलं न प्रेषयिष्यति चेत् का गतिः? एषः अंशः चिन्तितः वा भवता?" इति।

"प्रभो! तस्मै दुष्टाय अस्माभिः एका वराटिका अपि समर्पणीया नास्ति। उपायचिन्तनार्थं कश्चन कालः आवश्यकः खलु? तदर्थं मया मासात्मकः अवधिः प्रार्थितः, तावदेव। तदभ्यन्तरे गूढचरद्वारा अस्माभिः ज्ञातव्यं यत् तेन दुष्टेन राजकुमारी मदालसा कुत्र गोपिता इति। अनन्तरं तस्याः विमोचनार्थं योग्यः उपायः चिन्तनीयः" इति

उक्तवान् वृद्धः मन्त्री।

केशवसेनः कश्चन समर्थः गूढचारः। राजा मन्त्री च निश्चितवन्तौ यत् एतत्कार्यार्थम् एषः एव योग्यः इति। अनन्तरं तौ केशवसेनम् आहूय– "राजकुमारी कुत्र इति कथमपि ज्ञात्वा आगच्छतु" इति तं सूचितवन्तौ।

केशवसेनः तदनन्तरदिने एव काम्बोजतः प्रस्थाय निरन्तरं प्रयाणं कृत्वा गिरिपुरस्य सीमायां स्थितायाः नद्याः तीरं प्राप्तवान्।

तत्र धूमकेतोः सैनिकानां शिबिराणि आसन्। केशवसेनः धीवरवेषेण अपरं तीरं प्राप्तवान्। सन्दर्भानुगुणं वेषं कण्ठस्वरं च परिवर्तयन् सः तत्र सर्वत्र अटित्वा ज्ञातवान् यत् ततः अनतिदूरे स्थिते अरण्ये कुत्रापि राजकुमारी रहसि स्थापिता अस्ति इति।

एतावत् ज्ञात्वा केशवसेनः तस्मिन् दिने रात्रौ अरण्यस्थं प्राचीनदुर्गं प्राप्तवान्। जागरूकतया गच्छन् सः तत्र सर्वत्र अन्वेषणं कुर्वन् आसीत्। तावता कश्चन शिलाखण्डः तम् अद्दिश्य आगतः। सः झटिति परिवृत्य दृष्टवान्। शिलापातात् पूर्वम् एव सः शिरः पार्श्वे नीतवान् इत्यतः सः न व्रणितः। शिलाक्षेपकः एकेन हस्तेन दीपशिखां गृहीत्वा अपरेण हस्तेन दण्डम् उन्नीय केशवसेनं ताडयितुम् अग्रे आगतः। तावता केशवसेनः स्वसमीपे स्थितात् खड्गात् तं कण्ठे प्रहृतवान्। सः आक्रन्दनं कुर्वन् अधः पतितवान्। तस्य आक्रन्दनं श्रुत्वा बहवः सैनिकाः तस्यां दिशि धावन्तः आगतवन्तः।





तदा केशवसेनः पतितस्य सैनिकस्य हस्ते स्थितां दीपशिखाम् आकृष्य शुष्केषु तृणेषु, गुल्मेषु, वृक्षेषु च अग्निं योजितवान्। अकस्मात् उद्भूतम् अग्निं दृष्ट्वा सैनिकाः कोलाहलं कृतवन्तः। एतन्मध्ये केशवसेनः ततः पलायितवान्। विघ्नान् अविगणयन् सः ततः धावन् चतुर्णां दिनानाम् अनन्तरं काम्बोजराजधानीं प्राप्तवान्।

बहुधा व्रणितात् केशवसेनमुखात् प्रवृत्तं समग्रं श्रुत्वा राजा मन्त्री च चिन्ताक्रान्तौ जातौ।

अनन्तरदिने कृतवर्मा नाम अन्यः युवकः गूढचरः राजानं दृष्ट्वा उक्तवान्– "प्रभो, अहं राजकुमारीं बन्धविमुक्तां करिष्यामि" इति।

राजा मन्त्री च तम् आश्चर्येण पश्यतः। राजकुमार्याः बन्धविमोचनं तु कथमपि करणीयम् एव आसीत् इत्यतः राजा कृतवर्माणम् उक्तवान्– "अस्तु तर्हि, केशवसेनं दृष्ट्वा राजकुमारी यत्र स्थापिता तत् स्थलं ज्ञात्वा गच्छतु" इति।

"किं तेन? केशवसेनेन स्थलं सूच्येत। किन्तु तत्र गमनं व्यर्थम्" इति उक्तवान् कृतवर्मा।

एतत् श्रुत्वा राजा मन्त्री च कृतवर्माणम् आश्चर्येण दृष्टवन्तौ।

तदा कृतवर्मा पुनः उक्तवान्– "राजकुमारीगोपनस्थलं शत्रुभिः ज्ञातम् इति ज्ञात्वा अपि धूमकेतुः राजकुमारीं किं तत्रैव स्थापयेत्? कदापि न इति भाति मम" इति।

'सत्यम् एतत्' इति मनसा अङ्गीकृतवन्तौ राजा मन्त्री च। 'एषः कृतवर्मा बुद्धिमान्' इति तु एतावता ताभ्यां ज्ञातम्। अतः राजा– "अस्तु, विचिन्त्य पदानि स्थापयन् कार्ये प्रवृत्तः भवतु" इति आदिष्टवान्। राज्ञः मन्त्रिणः च अनुज्ञां प्राप्य ततः निर्गतवान् कृतवर्मा।

चतुर्णां दिनानाम् अनन्तरं गूढचरः कृतवर्मा एकाकी प्रत्यागतवान्। तेन सह राजकुमारी तु नास्ति।

नमस्कृत्य स्थितं कृतवर्माणम् उक्तवान् राजा– "कुत्र राजकुमारी? अहं कार्यं साधयिष्यामि इति गर्वेण स्वयम् अग्रे

आगतवान् खलु? इदानीं तु कार्यम् असंसाध्य भीरुः इव प्रत्यागतः अस्ति" इति।

तदा कृतवर्मा विनयेन उक्तवान्– "प्रभो, क्षन्तव्यः अहम्। धूमकेतुराजः इदानीं ताम् अरण्यस्थात् प्राचीनदुर्गतः नीत्वा नदीसागरसङ्गमस्थले कस्मिंश्चित् द्वीपे गोपितवान् अस्ति। प्राणान् पणीकृत्य मया तत्र गन्तव्यम् आसीत्। किन्तु तथा कृत्वा गत्वा यदि अहं प्राणैः वियुक्तः भवेयं तर्हि राजकुमारी कुत्र इति निवेदयितुं कोऽपि न भवति इत्यतः अहम् अत्र आगतः" इति।

"भीरो! व्याजकथक!" इति उक्त्वा तं ततः प्रेषितवान् राजा। तस्य निर्गमनस्य अनन्तरं राजा मन्त्री च किञ्चित्कालं समालोच्य सेनानायकम् आहूय पृष्टवन्तौ– "कृतवर्मणा सूचितः द्वीपः अस्माकं राज्यस्य समीपे एव अस्ति। द्वीपस्य उपरि हठात् आक्रमणं कृत्वा राजकुमारीं बन्धविमुक्तां कर्तुं शक्येत वा?" इति।

तदा सेनापतिः उक्तवान्– "साहसे श्रीः प्रतिवसति इति अभिज्ञाः वदन्ति। अतः प्रयत्नेन कार्यं साधयितुं शक्यते एव। शताधिकाः शूराः सैनिकाः धीवरवेषं धृत्वा नौकया द्वीपसमीपं गत्वा हठात् आक्रमणं कुर्वन्ति चेत् राजकुमारी बन्धविमुक्ता भवेत् एव। एतस्य कार्यस्य नायकत्वम् अहं निर्वक्ष्यामि" इति।

"अस्तु तर्हि। अनुज्ञा दीयते मया। कार्यं




यदा सेत्स्यति तदा झटिति वार्तां प्रेषयतु। वयं सैन्येन सह गत्वा गिरिपुरम् आक्रम्य धूमकेतुं संहृत्य आगमिष्यामः" इति उक्तवान् वृद्धः मन्त्री।

एतस्याः योजनायाः अनुगुणं मदालसा बन्धविमुक्ता सती प्रासादं सकुशलं प्रत्यागतवती। गिरिपुरं काम्बोजाधीनम् अभवत्। धूमकेतुः बन्दी जातः।

विजयोत्सवदिने राजा मन्त्रिणम् उक्तवान्– "एतस्य सर्वस्य हेतुः गुप्तचरः सम्माननीयः" इति।

तदा वृद्धः मन्त्री उक्तवान्– "आम्। सम्माननार्थं कृतवर्मा एव अर्हः, न तु केशवसेनः" इति।

राजा क्षणकालम् आलोच्य– "भवता युक्तम् एव उक्तम्" इति उक्त्वा राजसभायां कृतवर्मणः सम्माननं कृतवान्। केशवसेनः गूढचरनायकपदवीतः निष्कासितः। तत्स्थाने कृतवर्मा नियोजितः च।

वेतालः एवं कथां समाप्य अवदत्– "राजन्! वृद्धस्य मन्त्रिणः कथनस्य अनुगुणं काम्बोजराजः समर्थस्य, स्वामिभक्तस्य केशवसेनस्य सम्माननविचारं परित्यक्तवान्। तं पदवीच्युतं कृतवान् चापि। एतत् अनुचितं न वा? यं भीरुः इति निन्दितवान् तम् एव कृतवर्माणं सत्कृतवान् राजा। तं गूढचरनायकपदव्यां योजितवान्। एतत् किम् उचितम्? मम एतेषां प्रश्नानाम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः एवम् उक्तवान्– "केशवसेनः स्वामिभक्तः समर्थः च इत्यत्र नास्ति सन्देहः। किन्तु सः कोपशीलः। क्रुद्धस्य विवेकः नश्यति। प्राणापाये सन्निहिते सः अरण्यम् एव दग्धुम् उद्युक्तः। 'यस्याः निमित्तम् अत्र आगतं सा राजकुमारी एतस्मिन् एव अरण्ये अस्ति, अरण्यं दग्धं चेत् तस्याः अपि अपायः स्यात्' इत्येतम् अंशम् एव सः क्रोधसमये विस्मृतवान् आसीत्। केशवसेनस्य अविवेकस्य कारणतः समस्या पूर्वापेक्षया जटिला जाता। राजकुमारीम् अन्यस्मिन् स्थले गोपितवान् धूमकेतुः। विवेकी कृतवर्मा तु राजकुमारी यत्र अस्ति तत् स्थलम् उपायेन ज्ञात्वा राजानं निवेदितवान्। अतः एव राजकुमार्याः विमोचनं सिद्धम्। धूमकेतुः अपि बद्धः। पुत्री न आगता इति कोपः आसीत् राज्ञः मनसि इत्यतः सः एकवारं कृतवर्माणं 'भीरो' इति निन्दितवान्। किन्तु अनन्तरकाले विवेकं प्राप्य सः तं सत्कृतवान्" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।





# अपूर्वं व्यजनम्

प्राचीने काले व्यजनसङ्ग्रहे कस्यचित् राज्ञः विशेषासक्तिः आसीत्। तस्य सङ्ग्रहालये बहुविधानि व्यजनानि आसन्।

कदाचित् राजा मध्यह्नभोजनं समाप्य विश्रान्त्यर्थं शयनगृहं गच्छन् आसीत्। तदा कश्चन व्यजनविक्रयिकः उच्चस्वरेण– ''अपूर्वाणि व्यजनानि। अल्पमूल्येन प्राप्यन्ते अपि। दशाधिकवर्षाणि जीवन्ति एतानि'' इति वदन् मार्गे गच्छन् आसीत्।

राजा भटं सम्प्रेष्य तं व्यजनविक्रयिकं स्वसमीपम् आनायितवान्।

''भवतः व्यजनानां किं वैशिष्ट्यम्? सामान्यतः व्यजनानि एकं वर्षं वर्षद्वयं वा जीवन्ति। भवान् वदति यत् दशाधिकवर्षाणि जीवन्ति इति। किम् एतत् सत्यम्?'' इति तं पृष्टवान् राजा।

''प्रभो! भवतः पुरतः असत्यं वदेयं वा? दर्शनमात्रेण वस्तुनः योग्यता कदाचित् न ज्ञायते। योग्येन क्रमेण एतस्य उपयोगः कृतः चेत् विंशतिं वर्षाणि यावत् एतानि जीवन्ति एव'' इति उक्तवान् व्यजनविक्रयिकः।

''अस्तु तर्हि। अद्य एकं व्यजनं मह्यं ददातु। एतस्य वैशिष्ट्यं परिशीलयिष्यामि। मासानन्तरं पुनः आगत्य मां पश्यतु'' इति उक्त्वा राजा एकं व्यजनं क्रीतवान्।

''यथाज्ञापयति महाप्रभुः। किन्तु श्रीमन्, एतस्य उपयोगक्रमः मया निवेदनीयः अस्ति'' इति उक्तवान् व्यजनविक्रयिकः।

तदा राजा अल्पेन कोपेन– ''व्यजनविषये निपुणः अहम् एतस्य सामान्यस्य व्यजनस्य उपयोगक्रमं न जानीयां वा? अलं कथनेन। गच्छतु तावत्'' इति उक्त्वा तं विक्रयिकं प्रेषितवान्।

राजा व्यजनेन बीजितवान्। वैशिष्ट्यं तु

किमपि न दृष्टम्। पुनरपि द्वित्राणि दिनानि यावत् उपयोगः कृतः। तावता व्यजनशलाका शिथिला जाता। रज्जुः छिन्ना। व्यजनदलानि पतितानि। 'वचने चतुरः एषः विक्रयिकः सर्वथा वञ्चकः एव' इति चिन्तितवान् राजा।

ततः मासानन्तरं स च व्यजनविक्रयिकः यथापूर्वम्— "अमूल्यानि व्यजनानि....." इत्येवं वदन् राजभवनस्य पुरतः आगतवान्। राजा भटद्वारा तम् अन्तः आनायितवान्। व्यजनविक्रयिकः राजानं विनयेन नमस्कृत्य— "प्रभोः! मया दत्तं व्यजनं कथम् अस्ति?" इति धाष्ट्र्येन पृष्टवान्।

राजा तु महता कोपेन व्यजनस्य भागान् आनाय्य विक्रयिकाय प्रदर्श्य— "एते भागाः भवता दत्तस्य व्यजनस्य एव खलु? पश्यतु भवता दत्तस्य व्यजनस्य दुर्दशाम्" इति उक्तवान्।

"प्रभो! व्यजनस्य या दुर्दशा आगता तत्र अहं कारणं न। योग्येन क्रमेण तत् न उपयुक्तम् इत्यतः एवं जातम्" इति शान्तस्वरेण उक्तवान् व्यजनविक्रयिकः।

"उपयोगक्रमे दोषः? कथम् उपयोक्तव्यम् आसीत् मया?" इति कोपेन एव पृष्टवान् राजा।

"प्रभो! एतत् अपूर्वं व्यजनम् इति उक्तम् आसीत् खलु? एतस्य उपयोगक्रमः एवम्— मुखसमीपे व्यजनं हस्तेन ग्रहीतव्यम्। अनन्तरं मुखम् इतस्ततः चालनीयम्। व्यजनम् इतस्ततः कदापि न चालनीयम्। एवम् उपयुक्तं चेत् एतत् विंशतिवर्षाणि निश्चयेन जीवेत्" इति उक्तवान् व्यजनविक्रयिकः।

राजा यथा व्यजनप्रियः तथैव विनोदप्रियः अपि। सः विक्रयिकस्य वचनं श्रुत्वा हसन्— "व्यजनविक्रयणं भवदर्थं योग्यः उद्योगः न। वञ्चनं कृत्वाऽपि, कुपितं मां हासयितुं समर्थः भवान् मम आस्थानस्य विदूषकः भवितुम् अर्हति। अद्य आरभ्य भवान् मम आस्थानस्य विदूषकः सन् वाक्चातुर्येण सभ्यान् रञ्जयतु" इति उक्तवान्।



# महात्मभिः दृष्टं भारतम्

## समर्पणभावना

भारतस्वातन्त्र्यसङ्ग्रामे विभिन्नक्षेत्रीयाः जनाः भागं वहन्तः प्रसिद्धाः जाताः। एवं जनादरं प्राप्तवत्सु अन्यतमा अस्ति कवयित्री श्रीमती सरोजिनी नायडू।

'कविकोकिला' इति ख्यातिं गतायाः सरोजिन्याः पिता अघोरनाथचट्टोपाध्यायः हैदराबाद्राजस्य कलाशालायां प्राचार्यः आसीत्। १८७९ तमे वर्षे जन्म प्राप्तवती सरोजिनी बाल्यतः एव प्रगतिपरभावनाभिः युक्ता आसीत्। अतः एव सा वर्णान्तरे जातं डा. गोविन्दराजुलुनायडूमहोदयं परिणीतवती। १९२५ नमे वर्षे सा भारतीयराष्ट्रियकांग्रेसासंस्थायाः अध्यक्षपदम् अलङ्कृतवती।

सरोजिनी नायडू यत्र यत्र गच्छति तत्र सर्वत्र प्राचीनभारतस्य वैभवविषये श्रेष्ठताविषये च भाषणं करोति। तद्द्वारा नवोत्साहं नवजागरणं च उत्पादयति स्म सा। राजकीयं क्षेत्रं प्रविशन्ती सा प्रजाद्वारा एवं प्रतिज्ञां कारितवती– "पर्वत-नक्षत्र-साक्षितया वयं सदा सम्भूय अग्रे गच्छाम। अस्माकं शरीरे स्थितानि सामर्थ्यं, बुद्धिबलं, विचारान् वचनानि च मातृभूम्याः सौभाग्यसिद्ध्यर्थं समर्पयेम' इति।

## भवन्तः जानन्ति वा?

१. अस्माकं देशे कस्मिन् सम्प्रदाये जातमात्रः पुत्रः मृगयाशीलः युद्धोत्साही च क्रियते?
२. प्रपञ्चस्तरे अत्युन्नतः जलप्रपातः कुत्र अस्ति?
३. 'द क्वीन् आफ् डेक्कन्' 'डेक्कन् क्वीन्' इत्येतयोः कः भेदः?
४. वेनिस्नगरे द्रष्टुं शक्यायाः गोण्डोलानौकायाः सदृशी दीर्घा नौका अस्माकं देशे कुत्र उपयुज्यते?
५. श्रवणबेळगोळस्य गोम्मटेश्वरविग्रहस्य कुतबमिनारभवनस्य च औन्नत्ये किं साम्यम् अस्ति?

(उत्तराणि ३६तमे पृष्ठे)




# महालक्ष्मीः

अमृतप्राप्त्यर्थं देवाः दानवाश्च मन्दरं मन्थानं कृत्वा वासुकिं रज्जुं कृत्वा क्षीरसमुद्रस्य मथनं यदा कृतवन्तः तदा क्षीरसमुद्रात् हालाहलविषम् उत्पन्नम्। अमृतोत्पत्तितः पूर्वम् अन्यानि अनेकानि दिव्यानि वस्तूनि अपि उत्पन्नानि। एतेन क्रमेण महालक्ष्मीः क्षीरसमुद्रतः उत्पन्ना।

क्षीरसागरकन्यका लक्ष्मीदेवी सकलसम्पदः अधिष्ठात्री इति जनानां विश्वासः। लक्ष्मीदेवी यथा सुखसाधनानि ददाति तथैव ज्ञानं शान्तिं चापि ददाति। अतः एव भक्ताः ताम् अष्टैश्वर्यप्रदायिनी इति स्तुवन्ति।

लक्ष्मीः भगवतः नारायणस्य पत्नी। अतः एव नारायणस्य अपरं नाम श्रीपतिः इति।

लक्ष्म्याः रूपाणि अनेकानि। सौभाग्यानि ददाति इत्यतः सौभाग्यलक्ष्मीः सा। गृहं रक्षति पोषयति च इत्यतः सा गृहलक्ष्मीः। वणिजैः आराध्यमाना सा धनलक्ष्मीः। वीराणां शूराणां च आराध्यदेवता सा विजयलक्ष्मीः।

पद्मं लक्ष्म्याः प्रियं पुष्पम्। पद्मासना, पद्महस्ता सा पद्मपत्रनिभानना पद्मनिवासिनी चापि।

# र स वा र्ताः

## विलक्षणे बालिके




सद्यः दशमकक्ष्यायाः परीक्षायां लिखन्त्यौ द्वे बालिके सर्वेषां दर्शनकेन्द्रे आस्ताम्। सार्ध-अष्टवर्षीया मौसमीचटर्जी नाम बङ्गालदेशजाता बालिका तयोः अन्यतमा। एषा स्वस्य अपूर्वस्मरणशक्तेः आधारेण एतदर्थम् अर्हतां प्राप्तवती। अपरा महाराष्ट्रजा सुनीता कचारू सावन्त पादाङ्गुलीभिः एव उत्तरं लिखितवती। यतः तस्याः हस्ते न स्तः। परीक्षायां लेखनार्थं तस्यै अर्धघण्टावधिकः अधिकः कालः प्रदत्तः आसीत्। तथापि सा अन्ये इव घण्टात्रयात्मके अवधौ एव लेखनं समापितवती।

## अविश्वासः




अमेरिकादेशे बार्क्राफ्ट् एलिमेण्टरीशालायां अण्टोनी एण्डर्सन्नामकः अष्टवर्षीयः बालकः पठति। कदाचित् अमेरिकाध्यक्षः जार्ज् बुष् तं विद्यालयम् आगतः। 'स्वपार्श्वे स्थितः राष्ट्राध्यक्षः जार्ज् बुष् एव' इत्यत्र अविश्वासः तस्य बालकस्य। आत्मनः परिचयं दृढीकर्तुं बुष्वर्यः भावचित्रसहितं वाहनचालनानुमतिपत्रं प्रदर्शितवान्। द्वारसमीपे स्थितं स्वकीयं कार्यानम् अपि प्रदर्शितवान्। तथापि बालकस्य अविश्वासः। इतोऽपि बलवत्तरं प्रमाणम् अपेक्षमाणः सः बुष्वर्यं हसन् पश्यति!

# सम्पादयेम वयं साहित्यज्ञानसम्पदम्

१. भास्कराचार्यः स्वेन लिखितस्य ग्रन्थस्य प्रथमाध्यायं पुत्र्याः नाम्ना निर्दिष्टवान्। तस्याः पुत्र्याः नाम किम्? ग्रन्थस्य च नाम किम्?

२. साहित्यक्षेत्रे नोबेल्पारितोषिकं प्राप्तवान् प्रथमः सोवियत्रशियालेखकः कः?

३. सि.वि. रामन्महोदयः कस्यचित् पुस्तकस्य रचनार्थं पुष्पतः प्रेरणां प्राप्तवान्? तस्य पुस्तकस्य नाम किम्?

४. 'दि लास्ट् मेन् इन् युरोप्' नामकं पुस्तकं पूर्वम् अन्येन नाम्ना प्रकटितम् आसीत्। तत् नाम किम्? तस्य च रचयिता कः?

५. मेरी एन् एवान्स्, एरिक् ब्लेयर्– इत्येते प्रसिद्धयोः लेखिकयोः नाम। तयोः पूर्वतनं नाम किम् आसीत्?

# उत्तराणि

## सामान्यज्ञानम्

१. कर्णाटकराज्ये कोडगुनामके प्रदेशे जातमात्रस्य शिशोः हस्ते लघुधनुः बाणं च स्थापयन्ति। शिशुद्वारा भुषुण्डिकां प्रवर्तयन्ति च।

२. कर्णाटके जोग्जलपातः इति नाम। एतस्य च औन्नत्यं २५३ मीटर्।

३. 'द क्वीन् आफ् डेक्कन्' इति पुणेनगरस्य अपरं नाम। 'डेक्कन् क्वीन्' इति तु वेगगामिनः यानस्य नाम, यच्च प्रतिदिनं पुणे-मुम्बईमार्गे (१९० कि.मी.) सञ्चरति।

४. काश्मीरे डाल्नामके कासारे।

५. गोम्मटेश्वरस्य औन्नत्यं १७ मीटर्। कुतुबमिनार्भवनस्य तु ७१ मीटर्। एवं तयोः औन्नत्ये सङ्ख्यापरिवृत्तिः।

## साहित्यज्ञानम्

१. लीलावती इति। सिद्धान्तशिरोमणिः इति च।

२. मिखायिल् शोलोकोव्। (१९६५ तमे वर्षे)

३. वर्णानां विषयं निरूपयत् 'दि फिजियालजी आफ् विजन्' नामकं पुस्तकम्।

४. १९८४, जार्ज् आर्वेल्।

५. जार्ज् इलियट्, जार्ज् आर्वेल्।



प्रपञ्चपुराणगाथावली – ४

## पेर्सियसः आन्द्रोमेदा च

(गताङ्कात् अनुवृत्तः भागः)

धीरः पेर्सियसः मेदुसां संहृत्य तस्याः शिरः स्वीकृत्य प्रत्यागच्छन्, केनचित् क्रूरजन्तुना खादनार्थं समुद्रतीरे बद्धां सुन्दरीम् आन्द्रोमेदां बन्धमुक्तां कृतवान्। एतेन सन्तुष्टौ आन्द्रोमेदायाः मातापितरौ स्वपुत्रीं पेर्सियसाय वधूरूपेण अर्पितवन्तौ।

आन्द्रोमेदा-पेर्सियसयोः विवाहः सम्पन्नः। ततः अल्पे एव काले आन्द्रोमेदायाः बन्धुः मित्रैः सह आगत्य हठात् आक्रमणं कृत्वा आन्द्रोमेदाम् अपहर्तुम् उद्युक्तः जातः। एतत् जानन् पेर्सियसः तस्य पुरतः मेदुसायाः शिरः गृहीतवान्। तस्य दर्शनेन सः आन्द्रोमेदाबन्धुः शिलारूपं प्राप्तवान्।






पेर्सियसः नवोढया पत्न्या आन्द्रोमेदया सह मातुः दर्शनार्थं सेरिफोजद्वीपं गतवान्। तस्मिन् एव समये कामपीडितात् तद्द्वीपराजात् आत्मनः रक्षणार्थं कुत्रापि धावन्ती आसीत् तस्य माता। तदा तत्र आगतः पेर्सियसः मेदुसायाः शिरः प्रदर्शयन् राजानं शिलारूपिणं कृतवान्।



'इतःपरम् अपि मेदुसायाः शिरसः उपयोगः उचितः न स्यात्' इति आलोच्य पेर्सियसः तत् शिरः मिनर्वादेव्याः पदतले समर्पितवान्। 'आत्मशक्त्या एव जीवनं निर्वहणीयम्' इति दृढसङ्कल्पं कृतवान् च। एतदनन्तरं कानिचन दिनानि मन्दिरे ध्यानमग्नः सन् यापयित्वा स्वराज्यम् आर्गोसदेशं प्रति प्रस्थितवान्।

मात्रा प्रियपत्न्या च सह गच्छन् अस्ति पेर्सियसः। पूर्वं यः मातामहेन सागरे निर्दयं परित्यक्तः आसीत् इदानीं सः सुन्दरः युवकः सन् स्वभूमिं प्रतिगच्छन् अस्ति। तस्य कीर्तिः तु सर्वासु दिक्षु प्रसृता आसीत्।





नौका लारिस्साद्वीपस्य तीरम् आगता। तस्य द्वीपस्य राजा पेर्सियसं महता आदरेण स्वागतीकृतवान्। सत्कारादीनाम् अनन्तरं निवेदितवान् यत् मम पितुः स्मरणार्थं प्रचाल्यमाने विनोदोत्सवे भवता अपि भागः ग्रहीतव्यः इति। स्नेहवशात् एतत् अङ्गीकृतवान् पेर्सियसः।

उत्सवे विविधासु क्रीडास्पर्धासु भागं गृह्णन् पेर्सियसः जनान् तोषितवान्। एवं कुर्वन् सः एकं महद्भारयुक्तं शिलाचक्रम् लीलया उन्नीय परितः भ्रामयन् आकाशे क्षिप्तवान्। तच्च चक्रं सीमारेखाम् अतिक्रम्य अग्रे गतम्। समुद्रे नौकया आगच्छतः कस्यचित् उपरि पतितं च।





एतेन शिलापातेन स च पुरुषः गतप्राणः जातः। स च न अन्यः, अपि तु अर्गोस्राजः अक्रियसः एव। दौहित्रस्य आगमनवार्तां श्रुत्वा दौहित्रदर्शनात् आत्मनः रक्षणार्थं सः लारिस्साद्वीपं प्रति आगच्छन् आसीत्। दौर्भाग्यवशात् पेर्सियसेन क्षिप्तं शिलाचक्रं तदुपरि एव पतितम्। 'दौहित्रतः मरणं भविष्यति' इति ज्योतिषिकैः यत् उक्तम् आसीत् तत् सत्यम् एव जातम्।

ततः पेर्सियसः अर्गोसराज्यं गतवान्। 'मातामहस्य मरणस्य हेतुः सन् अहं मातुः दुःखस्य कारणं जातः। अतः मातामहसम्बन्धि सिंहासनम् अहं न आरोहामि' इति निश्चितवान् सः।





पेर्सियसः मैसिनलूनामकं नूतनं नगरं संस्थाप्य तत्र निवसन् राज्यपालनं कृतवान्। आन्द्रोमेदया सह निवसन् सः सुखेन दिनानि यापयन् धर्ममार्गेण चिरकालं यावत् राज्यपरिपालनं कृतवान्। जनानाम् आदरपात्रं जातश्चापि।

जनाः पेर्सियसं दैवांशसम्भूतं भावयन्तः तस्य पूजां कर्तुम् आरब्धवन्तः। तस्य सुविशालं विग्रहं प्रतिष्ठापितवन्तः चापि। तस्मिन् प्रदेशे स च विग्रहः चिरकालं यावत् जनानां चित्तस्य आकर्षणकेन्द्रम् आसीत्।






पेर्सियसस्य पुत्रेषु अन्यतमः पेर्सस् पर्शियाराज्यं स्थापितवान्। ततः पर्शियन्परम्परा आरब्धा। पेर्सियसस्य जीवनकथा बहूनां कथा-काव्य-नाटकादीनां मूलस्रोतः आसीत्। श्रीमान् अरविन्दः अपि पोर्सियसम् आधारीकृत्य रूपकं रचितवान् अस्ति।




# मन्त्री मिलिन्दः

पूर्वं चित्रसेनः नाम राजा कोसलदेशं पालयन् आसीत्। चित्रसेनस्य मन्त्री सुबुद्धिः। मन्त्री नाम्ना सुबुद्धिः, किन्तु तस्य व्यवहाराः तु विपरीताः। अल्पे एव काले चित्रसेनेन मन्त्रिणः स्वभावः सम्यक् ज्ञातः। तथापि सः सुबुद्धिं मन्त्रिपदवीतः न निष्कासितवान्। 'अन्यः समर्थः प्रामाणिकः विवेकी जनः कोऽपि लभ्येत वा' इति अन्वेषणम् आरब्धवान् सः। एतदर्थं समग्रे राज्ये सः अटितवान्। अन्ते कस्मिंश्चित् ग्रामे गुरुकुलं चालयन् मिलिन्दः तेन दृष्टः। परीक्ष्य राजा निश्चितवान् यत् मिलिन्दः मन्त्रिपदव्यर्थं योग्यः इति।

राजधानीम् आगतः राजा एतं विषयं संसूच्य एकं पत्रं दूतद्वारा प्रेषितवान्। राज्ञः पत्रं पठितवतः मिलिन्दस्य महदाश्चर्यम्। सः तस्मिन् एव दिने ग्रामतः प्रस्थाय राजधानीं प्राप्य राजानम् एकान्ते दृष्ट्वा निवेदितवान्– "प्रभो, विद्यादाने मम आसक्तिः तृप्तिः च। शासनविचाराः मह्यं न रोचन्ते। मन्त्रिपदवीम् अहं सर्वथा न इच्छामि। एतस्मिन् विषये अनुरोधः मास्तु" इति।

तदा राजा चित्रसेनः उक्तवान्– "देशस्य उन्नतिः अधोगतिः वा मार्गदर्शकं मन्त्रिणम् आधारीकृत्य तिष्ठति। इदानीन्तनः मन्त्री सुबुद्धिः धनलुब्धः स्वार्थसाधकः च। प्रजानां हितविषये सः कदापि न चिन्तयति। एतादृशेन मम किं प्रयोजनम्? यदि समर्थः कोऽपि मन्त्री स्यात् तर्हि प्रजाहितं साधयितुं शक्येत। अस्माकम् अधिकारिगणः परिष्करणीयः अस्ति। असमर्थाः उत्कोचग्राहिणः च उद्योगात् निष्कासनीयाः। समर्थाः प्रामाणिकाः च तत्र योजनीयाः। दुष्टाः दण्डनीयाः, शिष्टाः रक्षणीयाः। एतत्सर्वं कर्तुं

"भामहः"



भवान् समर्थः। अतः भवतः साहाय्यं प्रार्थितं मया। गुरुकुलविषये चिन्ता मास्तु भवतः। तत् इदानीं यथा अस्ति तथैव यथा अनुवर्तेत तथा व्यवस्थाम् अहं करिष्यामि" इति।

प्रजाहितविषयं विशेषतः चिन्तयतः राज्ञः सानुरोधं निवेदनं तिरस्कर्तुम् अशक्तुवन् मिलिन्दः मन्त्रिपदवीस्वीकारम् अङ्गीकृतवान्।

अनन्तरदिने एव मिलिन्दः मन्त्री जातः। सुबुद्धिः पदवीतः च्युतः अभवत्। एतत् परिवर्तनं दृष्ट्वा आश्चर्यम् अनुभूतवान् सुबुद्धिः। एवं प्रवर्तेत इति तेन न निरीक्षितम् आसीत्। अतः आत्मना कृतान् दोषान् तिरोधातुम् अपि न शक्तवान् सः।

नूतनः मन्त्री मिलिन्दः अधिकार-स्वीकरणस्य अनन्तरं प्रथमे दिने एव सुबुद्धिम् आहूय तेन कृतान् दोषान् उक्त्वा "एतद्विषये किम् उत्तरं भवतः?" इति पृष्टवान्।

तदा सुबुद्धिः– "एते दोषाः घटिताः इति तु सत्यम् एव। किन्तु दोषी अहम् एव इति अहं न अङ्गीकरोमि। सहकारिषु अधिकारिषु मया विश्वासः कृतः। प्रमुखान् कांश्चन व्यवहारान् अहं पश्यामि स्म। अन्येषां सर्वेषां निर्वहणं सहकारिणाम् अधिकारिणाम् एव आसीत्। अतः बहूनां दोषाणां प्रतिभुवः ते एव" इति वदन् सहकारिणाम् उपरि दोषम् आरोपितवान्।

सुबुद्धेः सहकारिणः अधिकारिणः शतम् आसन्। मिलिन्दः तान् आहूय एतद्विषये पृष्टवान्। तदा ते सर्वे एकस्वरेण उक्तवन्तः यत् वयं दोषभागिनः न। सुबुद्धिना यथा उक्तं तथा कृतम् अस्माभिः इति।

"एवं तर्हि सर्वस्य अपि प्रतिभूः सुबुद्धिः एव इति भवताम् आशयः। सः दुष्टः स्वार्थी च आसीत् इति वदन्ति भवन्तः। एतद्विषये प्रमाणं किमपि अस्ति वा भवतां समीपे?" इति पृष्टवान् मिलिन्दः।

तदा कश्चन अधिकारी उत्थाय अग्रे आगत्य– "सुबुद्धिवर्यस्य दुष्टकार्याणां समर्थकानि प्रमाणानि अस्मासु एकैकस्य समीपे अपि शतशः सन्ति" इति उक्तवान्।

"अस्तु तर्हि। श्वः वयं पुनः मेलिष्यामः।

तदा भवतां सकाशात् विवरणानि सङ्ग्रहीष्यामि" इति उक्त्वा सर्वान् अधिकारिणः प्रेषितवान् मिलिन्दः।

अनन्तरं मिलिन्दः सुबुद्धिना सह राजानं दृष्ट्वा निवेदितवान्– "प्रभो! सुबुद्धिवर्यः स्वस्य अधिकारस्य काले सर्वान् अधिकारिणः निगृहीतवान् आसीत्। किन्तु तेषां प्रीतिम् आदरं वा प्राप्तुं सः न शक्तवान्। अतः एतम् अधिकारच्युतं ज्ञात्वा सर्वे अधिकारिणः एतं दूषयन्तः सन्ति" इति।

"तर्हि एषः सुबुद्धिः कीदृशेन दण्डेन दण्डनीयः इति भवतः आशयः?" इति पृष्टवान् राजा।

"तत् श्वः निर्णीतं भविष्यति" इति उक्तवान् मिलिन्दः।

शतम् अधिकारिणः केन क्रमेण विचार्यन्ते इति ज्ञातव्यम् इति राज्ञः अपि इच्छा। अतः सः अनन्तरदिने मन्त्रिणः पार्श्वे उपविष्टवान्। तौ एकस्मिन् प्रकोष्ठे उपविष्टौ आस्ताम्। अधिकारिभिः एकैकशः तौ द्रष्टव्यौ।

विचारणा आरब्धा। एकः अधिकारी प्रकोष्ठं प्रविष्टवान्। "सुबुद्धिविषये भवान् यत् जानाति तत् वदतु" इति उक्तवान् मिलिन्दः।

तदा सः अधिकारी सुबुद्धेः दुर्गुणान्, दौर्बल्यानि, दुर्व्यवहारान् च एकैकशः वक्तुम् उद्युक्तः। तदा मिलिन्दः उक्तवान्–



"एतत्सर्वं मया श्रोतव्यं नास्ति। सुबुद्धेः सद्गुणं सामर्थ्यविशेषं च जानाति चेत् वदतु। अन्यथा गन्तुम् अर्हति भवान्" इति।

सः अधिकारी किमपि वक्तुम् अशक्नुवन् शिरः अवनमय्य ततः निर्गतवान्।

एतेन क्रमेण शतम् अधिकारिणः अपि मिलिन्दं दृष्ट्वा गतवन्तः। तेषु दश जनाः सुबुद्धेः सद्गुणं वक्तुं शक्तवन्तः। 'नयेन भयेन वा अन्यद्वारा कार्यं कारयितुम्, अन्यान् निग्रहीतुं च सुबुद्धेः सामर्थ्यम् आसीत्' इति दशानाम् अपि आशयः आसीत्।

सर्वेषां निर्गमनस्य अनन्तरं मिलिन्दः राजानम् उक्तवान्– "सुबुद्धौ यैः दशभिः अधिकारिभिः गुणाः दृष्टाः ते अधिकारे

स्थापनीयाः। अन्ये सर्वे उद्योगात् निष्कासनीयाः। सुबुद्धिः कारागारस्य अधिकारी सन् अपराधिनां योगक्षेमभारं निर्वहेत् इति आज्ञा करणीया" इति।

"कथम् एतत्? दोषकर्त्रे सुबुद्धये पुनः उद्योगः। सुबुद्धिना यथा उक्तं तथा कृतवताम् अधिकारिणां निष्कासनम्। किम् अत्र औचित्यम्?" इति पृष्टवान् राजा।

तदा मिलिन्दः हसन् उक्तवान्– "प्रभो, सुबुद्धिना दोषः कृतः। किन्तु तेन कृतान् दोषान् अद्यावधि कोऽपि अधिकारी भवन्तं न निवेदितवान्। किमर्थम्? यतः सुबुद्धिः नयेन भयेन वा तान् तथा निगृहीतवान् आसीत्। एवं निग्रहणार्थं किञ्चन सामर्थ्यम् आवश्यकम्। सुबुद्धौ स्थितम् एतत् सामर्थ्यं मनसि स्थापनीयम् अस्माभिः। एतावत्पर्यन्तं यः मन्त्री आसीत् सः देशात् निष्कास्यते चेत् कठोरं दण्ड्यते चेत् वा जनाः तत्र अनौचित्यं पश्येयुः। अतः कारागारपर्यवेक्षणे सः नियोजनीयः इति मया सूचितम्। एतेन आश्रयः दत्तः भवति। सुबुद्धिः अपराधिद्वारा नयेन भयेन वा कार्यं कारयितुं शक्नोति। तदा केचन वा अपराधिनः परिष्कृताः भवितुम् अर्हन्ति। सुबुद्धिः दुष्टतां यथा न प्रदर्शयेत् तथा परिशीलयितुं मन्त्री अहम् अस्मि एव। विविधान् अपराधान् कृतवद्भिः सह आजीवनं स्थातव्यम् इति एतत् एव सुबुद्धिना कृतस्य अव्यवहारस्य निमित्तं दण्डनम्। अन्यः अधिकारिणां विचारः। ये अन्येषां गुणान् द्रष्टुं न शक्नुवन्ति ते राजोद्योगिनः भवितुं न अर्हन्ति। तत्रापि अधिकारिणः सदापि गुणग्राहिणः स्युः एव। अतः एव गुणग्रहणे असमर्थाः अधिकारिणः उद्योगात् निष्कासनीयाः इति सूचितं मया" इति।

"साधु, मन्त्रिवर्य साधु! मया यत् चिन्तितं ततोऽपि अधिकं सामर्थ्यं विचक्षणता च भवतः" इति सन्तोषेण उक्तवान् राजा चित्रसेनः। योग्यस्य मन्त्रिणः मिलिन्दस्य मार्गदर्शनस्य कारणतः चित्रसेनराजः चिरकालं सुखेन राज्यपरिपालनं कृतवान्।






या नगरी केनापि प्रवेष्टुम् अशक्या इति ख्याता आसीत् तां नगरीं प्रविष्टवान् अस्ति हनूमान्। लङ्कानगरस्थान् विविधान् प्रासादान्, वैविध्येन शोभतः राक्षसान्, वैविध्यपूर्णान् तेषां व्यवहारान् च कुतूहलेन पश्यन् अग्रे गच्छन् अस्ति सः। राक्षसाः यज्ञदीक्षादीक्षिताः कुत्रचित् दृश्यन्ते चेत् अन्यत्र कुत्रचित् अपक्वं मांसं खादन्तः दृश्यन्ते। श्मश्रु-जटादिभिः आवृताः सर्वाणि अङ्गानि कम्पयन्तः विचित्रं व्यवहरन्तः कुत्रचित् दृश्यन्ते। अन्यत्र कुत्रचित् शत्रुनाशनार्थम् अभिचारहोमे निरताः दृश्यन्ते। विविधानाम् आयुधानां प्रयोगम् अभ्यस्यन्तः अपरत्र दृश्यन्ते। वामनाः विकृताकाराः, कृष्णवर्णीयाः तु तत्र तत्र दृश्यन्ते। कुत्रचित् सुन्दराङ्गाः अपि दृश्यन्ते।

'विचित्रम् एतत् नगरम्। एतस्य सौन्दर्यं मनः आकर्षति चेत् अत्र निवसतां राक्षसानां व्यवहारः भीतिं जुगुप्सां च जनयति' इति आलोचितवान् हनूमान्।

मार्गे मार्गे सञ्चरन् सः एकं यामं यापितवान्। तावता आकाशे चन्द्रः दृष्टः। सर्वत्र चन्द्रिका प्रसृता। चन्द्रिकायां विराजमानं, विशेषालङ्कारेण बहुभिः अट्टैः च शोभमानं भवनं दृष्ट्वा एव हनूमान् चिन्तितवान् यत् एतत् रावणस्य भवनम् इति। कुतूहलेन अन्तः गतवान् हनूमान्। रावणनाम्ना क्रियमाणः जयघोषः दूरात् एव सुस्पष्टं श्रूयते स्म। तेनैव सह स्त्रीणां मधुरः



कण्ठस्वरः अपि श्रूयते स्म। भवनस्य अलङ्कारे आत्मनः अलङ्कारे च मग्नाः रावणानुचराः तत्र तत्र दृश्यन्ते स्म।

तत्र बह्व्यः सुन्दर्यः दृश्यन्ते स्म। 'एतासु मया अन्विष्यमाणा सीता कुत्रापि स्यात् वा?' इति जागरूकतया दृष्टवान् हनूमान्। किन्तु तेन सीता कुत्रापि न दृष्टा। ताः स्त्रियः सौन्दर्येण असदृश्यः आसन्, तथापि सीतासमानता तु कस्याः अपि न आसीत्।

कामरूपी हनूमान् तत्रत्स्थलानुगुणं रूपं परिवर्तयन् अग्रे गच्छन् अस्ति। रावणगृहे एव कुत्रापि स्यात् सीता इति भावयति हनूमान्। अतः सः रावणगृहं सुसूक्ष्मं परिशीलयन् अस्ति।

रावणगृहस्य भित्तिः रजतमयी। तोरणानि च सुवर्णमयानि, मणि-माणिक्यादिभिः युक्तानि च। तस्मिन् भवने उत्तमाः अश्वाः गजाश्च पालिताः दृश्यन्ते। दिनरात्रिभेदं विना पुरुषाः स्त्रियः च सञ्चरन्तः भवन्ति तत्र। अतः रात्रिः अपि तत्र दिनायते। सर्वत्र भोगसाधनानि दृश्यन्ते। घोराकाराः क्रूराः कृष्णवर्णीयाः राक्षसाः रक्षणकार्ये निरताः सन्ति।

तस्मिन् भवने सुन्दरतया अलङ्कृताः बहवः प्रकोष्ठाः आसन्। सर्वेषु प्रकोष्ठेषु मृदुलाः तल्पाः, मृदुलाः आसन्दाश्च आसन्। यदा भोगसाधनेच्छा अधिका भवति तदा लङ्कानगरस्य ज्येष्ठाः अधिकारिणः अत्र आगत्य मनः विनोदयन्ति।

एतत्सर्वं पश्यन् उपरितनम् अट्टं गतवान् हनूमान्। तत्र पुष्पकविमानं दृष्टं तेन। तस्मिन् विमाने पर्वताः, नद्यः, वृक्षाः, लताः, गुल्माः च तथा चित्रितानि आसन् यत् तानि दर्शनमात्रेण वास्तविकानि इत्येव भान्ति स्म। एतत् पुष्पकविमानं पूर्वं कुबेरस्य आसीत्। रावणेन कुबेरात् बलात् वशीकृतम् आसीत् तत्। एतस्मिन् विमाने बहवः जनाः सुखेन उपवेष्टुम् अर्हन्ति स्म। विमानम् आन्तं दृष्ट्वा अधः आगतवान् हनूमान्। रावणभवने इतोऽपि बहुषु भागेषु अन्वेषणं करणीयम् अस्ति तेन।

अन्वेषणं कुर्वन् हनूमान् रावणस्य



अन्तःपुरं प्रविष्टवान्। अन्तःपुरे समग्रे दीपाः ज्वलन्ति स्म। रावणस्य पत्नीभिः आवृतम् अस्ति अन्तःपुरम्। तासु काश्चन रावणेन बलात् आनीय अन्तःपुरे योजिताः राजकन्याः। अन्याः काश्चन रावणस्य पराक्रमं श्रुत्वा दृष्ट्वा वा तस्य अन्तःपुरम् आगताः। अन्तःपुरे बह्व्यः निद्रामग्नाः आसन्। नृत्ये, गाने, वाद्यवादने, चामरवीजने, पादनोदने, एतादृशेषु अन्येषु कार्येषु मग्नाः ताः तत्र तत्रैव निद्रां प्राप्तवत्यः आसन्। काश्चन वाद्यानि उपधानीकृत्य स्वपन्ति चेत् अन्याः काश्चन अन्याः आलम्ब्य स्वपन्ति।

एकैकम् अपि तीक्ष्णया दृष्ट्या पश्यन् एषा सीता न इति निश्चिनुवन् अग्रे गच्छति हनूमान्।

एवं परिशीलयन् सः मणिमये मञ्चे सुप्तवन्तं रावणम् अपि दृष्टवान्। दूरात् दृष्टं चेत् क्रीडार्थं निर्मितः लघुपर्वतः इव दृश्यते स्म सः। तस्य हस्ताः फणां प्रसार्य स्थिताः सर्पाः इव दृश्यन्ते। श्रीगन्ध-चन्दनादिभिः लिप्तम् आसीत् तदीयं शरीरम्। विविधैः आभरणैः विभूषितम् आसीत् अपि तत्।

तस्य पार्श्वे अन्यस्मिन् मणिमये मञ्चे सर्वाभरणभूषिता मन्दोदरी शयिता आसीत्। तस्याः मुखं सम्यक् परिशीलितवान् हनूमान्। 'एषा एव सीता' इति भ्रान्त्या क्षणकालं चिन्तितवान् सः। तस्य मनः विकसितम् अभवत्।

अनन्तरक्षणे एव स च आनन्दः समूलं नष्टः। 'धिक् मम विवेकम्। रामविरहतप्ता सीता आभरणानि कथं धरेत्? एवं गाढनिद्रायां कथं मग्ना भवेत्? परपुरुषस्य पार्श्वे एवं सुखेन कथं वा निद्रां कुर्यात्? भ्रान्तिः मम। महापुरुषः रामः यां स्मरन् अहोरात्रम् अश्रूणि स्रावयति सा एतादृशी न स्यात् एव। सा म्लानवदना रामनाम-स्मरणतत्परा च स्यात्। रावणस्य पार्श्वे सुखेन सुप्तवतीं सीतां भावितवान् खलु अहम्। अहो अविवेकः मम!' इति खेदम् अनुभूतवान् सः।

ततः प्रस्थाय हनूमान् पुष्पोद्याने



चित्रशालायां च सीताम् अन्विष्टवान्। किन्तु कुत्रापि न दृश्यते सीता।

'रामेण तदा तदा यथा सन्दिह्यते तथा सीता प्राणैः वियुक्ता स्यात् वा? अथवा, एषा वशं न आगता इति कोपेन रावणः एव तां संहृतवान् स्यात् वा? अथवा, एताः घोराः राक्षस्यः तां खादितवत्यः स्युः वा? एतासां दर्शनेन विदीर्णहृदया सीता प्राणान् त्यक्तवती स्यात् वा? यद्येवं न स्यात् तर्हि एतावता सा मम दृष्टिपथम् आगच्छेत् एव खलु? यतः लङ्कायां प्रतिकोणम् अन्विष्टं मया। यदि जीवति तर्हि तया स्थितं स्थलं कुत्र स्यात्?'

'एषा लङ्का मायाविनां वासस्थानम्। अतः रहस्यस्थानानि इतोऽपि कानिचन भवितुम् अर्हन्ति। अन्वेषणार्थम् आगतेन मया धैर्येण इतोऽपि अन्वेष्टव्यम्। वृथा चिन्तया कालः न यापनीयः' इति चिन्तयन् आत्मनि धैर्यं पूरयित्वा पुनरपि अन्वेषणे उद्युक्तः जातः हनूमान्।

पातालगृहाणि कूपाः कासाराः च अन्विष्टाः तेन। सर्वत्र राक्षस्यः दृश्यन्ते, न तु सीता। सुन्दरी काचित् दृष्टा चेत् हनूमतः आशा प्रवर्धते। किन्तु 'सा सीता न' इति ज्ञातवतः तु तस्य मनः मुकुलितं भवति। सः पुनः अग्रे गच्छति।

'रावणेन आकाशमार्गेण सीता यदा आनीयमाना आसीत् तदा एव पतिता सीता प्राणान् त्यक्तवती स्यात् वा? अथवा रामम् एव स्मरन्ती उपवासम् आचरन्ती मृता स्यात् वा? सर्वत्र अन्वेषणस्य अनन्तरम् अपि सीता न दृष्टा चेत् मया समुद्रस्य प्रतिलङ्घनं न क्रियते। समुद्रतीरे एव चितां प्रज्वाल्य प्राणान् अर्पयिष्यामि' इति चिन्तयन् अग्रे गच्छति हनूमान्।

तावता अन्यः विचारः मनसि आगतः– 'एतस्य सर्वस्य कारणं रावणः। अतः स एव मारितः चेत् सर्वेषां तृप्तिः स्यात्। अथवा रावणं यज्ञपशुम् इव बद्ध्वा आकृष्य नीत्वा लक्ष्मणसहितस्य रामस्य पादयोः पुरतः पातयिष्यामि' इति।

एवं बहुधा चिन्तयन् गच्छन् हनूमान् दूरे उन्नतैः वृक्षैः युक्तं किञ्चन वनं दृष्टवान्।



'अत्रापि मया अन्वेषणं करणीयम्' इति निश्चित्य हनूमान् अग्रे गतवान्।

यदा वनस्य समीपं गतं तदा मन्दानिलस्पर्शेन तस्य हृदयं विकसितम् अभवत्। वनस्य शान्तं सौन्दर्यम् अव्यक्तम् आनन्दं जनयति स्म।

एतेन नूतनम् उत्साहं प्राप्य हनुमान् उत्प्लवनं कुर्वन् वनस्य प्राकारस्य उपरि उपविष्टवान्। वने तालवृक्षाः, आम्रवृक्षाः, अशोकवृक्षाः, चम्पकवृक्षाः, सालवृक्षाः बकुलवृक्षाः च आसन्। सर्वे ते उन्नताः। स च वसन्तकालः इत्यतः ते वृक्षाः पुष्पिताः आसन्। हनूमान् शरीरं लघूकृत्य तं वनसमूहं प्रविष्टवान्। वृक्षात् वृक्षं गच्छन् सः अग्रे गतवान्।

अपरिचितस्य आगमनात् भीताः पक्षिणः कलरवं कृतवन्तः। शाखाभ्यः पतितैः पुष्पैः आवृतः हनूमान् पुष्पमयः जातः। ततः अल्पे दूरे रमणीयः कासारः दृष्टः। कासारतीरे रमणीयानि आसनानि आसन्। मध्ये मध्ये रजतमयाः सुवर्णमयाः च कृत्रिमाः वृक्षाः अपि आसन्।

अशोकवृक्षबहुले एतस्मिन् वने कश्चन क्रीडापर्वतः अपि आसीत्। क्रीडापर्वतस्य शिखरं सुवर्णेन निर्मितम् आसीत्। तस्मिन् पर्वते विविधवर्णीयाभिः शिलाभिः निर्मितानि गृहाणि अपि आसन्। गृहाणां मध्ये काचित् जलधारा मन्दं सशब्दं प्रवहति।

हनूमान् अधिकैः पर्णैः युक्तस्य वृक्षस्य उपरि उपविश्य आत्मानं प्रयत्नेन गोपयन् परितः पश्यन् अस्ति। ततः अल्पे दूरे चैत्यप्रासादः कश्चन आसीत्। तस्य प्रासादस्य सहस्रं स्तम्भाः। हनूमान् कुतूहलेन अग्रे गतवान्।

तस्मात् प्रासादात् अनतिदूरे वृक्षस्य अधः काचित् क्षीणकाया म्लानवदना सुन्दरी दृष्टा। 'इतः पूर्वं राक्षसीषु दृष्टं विकृतं लक्षणम् एकम् अपि नास्ति एतस्याम्। एषा निश्चयेन सीता एव। अहो सीता दृष्टा मया। धन्योऽहम्' इति स्वगतं वदन् रामनाम जपितवान् हनूमान्।

सीतायाः शरीरं सर्वथा क्षीणम् आसीत्। तया धृता शाटिका नितरां मलिना आसीत्।

दुःखसूचकानि अश्रूणि निरन्तरं नेत्राभ्यां निस्सरन्ति। केशाः प्रसाधनरहिताः। तां परितः राक्षस्य उपविष्टाः दृश्यन्ते। ऋष्यमूकपर्वते पातितानि आभरणानि यस्याः शाटिकायाः भागेन बद्धानि आसन् ताम् एव शाटिकां धृतवती दृश्यते एषा। तया तत्र पातितानि आभरणानि कानि इति रामेण उक्तम् अस्ति। तानि एव आभरणानि एतस्याः शरीरे न दृश्यन्ते। 'अतः एषा सीता एव इत्यत्र नास्ति सन्देहः' इति निश्चितवान् हनूमान्।

आनन्दातिरेकवशात् किं करणीयम् इति न ज्ञायते हनूमता। किन्तु राक्षस्यः काश्चन इतोऽपि जागरिताः सन्ति इत्यतः प्रयत्नेन आत्मा गोपनीयः अस्ति तेन। अतः सः आनन्दजनितम् उद्वेगं कथमपि निगृह्य स्थितः अस्ति।

रात्रेः अन्तिमः यामः अपि अतीतः इव। दूरे कुत्रचित् राक्षसैः आरब्धं वेदपठनं श्रुतं हनूमता। ततः अल्पे एव काले मङ्गलवाद्यध्वनिः अपि श्रुतः। एतत् श्रुत्वा जागरितः अभवत् रावणः। जागरण-समनन्तरम् एव सीता स्मृता तेन। अतः सः झटिति आत्मानम् अलङ्कृत्य सीतासमीपं प्रस्थितवान्।

दूरात् एव रावणस्य आगमनं दृष्टवान् हनूमान्। शताधिकस्त्रियः रावणम् अनुसृत्य आगच्छन्त्यः आसन्। तासु काश्चन चामरेण वीजयन्ति स्म। अन्याः काश्चन सुवर्णमयान् दीपान् गृहीतवत्यः आसन्। काश्चन



सुवर्णपात्रेषु स्थितं जलं सिञ्चन्त्यः अग्रे गच्छन्ति। अन्याः काश्चन धीराः खड्गादीनि आयुधानि गृहीत्वा तम् अनुसरन्ति। काचित् रावणस्य उपरि छत्रं गृहीतवती अस्ति। यदा ताः भूमौ पदानि स्थापयन्ति तदा नूपुराणां मधुरः निनादः श्रूयते। दीपानां प्रकाशे हनूमान् रावणं सम्यक् अवलोकितवान्। रावणः इदानीं किं करिष्यति इति द्रष्टव्यम् इति हनूमतः कुतूहलम्। अतः सः मन्दम् अधस्तनशाखाम् आगत्य शाखाद्वयस्य मध्ये दृढम् उपविष्टवान्।

मूर्तिमती शोकदेवता इव स्थितां सीताम् उद्दिश्य रावणः एवम् उक्तवान्– "सीते! मां दृष्ट्वा भीता भवती किमर्थम् अङ्गानि सङ्कुचितानि कृत्वा उपविष्टवती? भवत्याः सौन्दर्येण क्रीतः अस्मि अहम्। मम समीपम् आगच्छतु कृपया। मत्तः अन्यतः वा अल्पम् अपि भयं नास्ति भवत्याः। एतावन्ति दिनानि गतानि चेदपि मयि प्रीतिः न उत्पन्ना वा? यावत् भवती प्रीत्या मत्समीपं न आगच्छति तावत् अहं भवतीं न स्पृशामि। दुःखं त्यजतु। मलिनानि वस्त्राणि अपनीय पट्टवस्त्राणि धरतु। उपवासव्रतं परित्यजतु। केशप्रसाधनं करोतु। पुष्पमालां धृत्वा आभरणैः आत्मानम् अलङ्करोतु। शक्तिदायकानि पानीयानि आमोदजनिकां सुरां च पिबतु। कोमले तल्पे शयनं करोतु। स्वेच्छया विहरन्ती सुखम् अनुभवतु। भवादृशी सुन्दरी लोके अन्या नास्ति एव। मयि अनुरागं प्रदर्शयतु। भवतीं पट्टमहिषीं करिष्यामि। अमूल्यम् एतत् यौवनं व्यर्थं मा करोतु। यौवने एव सुखानि अनुभोक्तव्यानि। अरण्यं गतः रामः एतावता क्रूरैः मृगैः खादितः स्यात्। अतः तं रामं हृदयमन्दिरात् निष्कास्य मम मूर्तिं तत्र प्रतिष्ठापयतु। रामः इतोऽपि जीवति इति भ्रमः भवत्याः। अथवा यदि सः जीवेत तर्हि अपि सामान्यः मानवः सः अत्र आगन्तुं न अर्हति। अतः 'रामः अत्र आगच्छेत्' इति भ्रमं परित्यजतु। सौभाग्यलक्ष्मीं पुरस्करोतु। मां च तोषयतु" इति।





# किन्नरराज्ञी

काश्मीरदेशे पूर्वं कश्चन निर्धनः निवसति स्म। सः प्रतिदिनं प्रातः अरण्यं गच्छति। सुन्दरान् पक्षिणः गृहीत्वा पञ्जरेण बध्नाति। सायं नगरं गत्वा विक्रयणं करोति च। एवं सः स्वस्य, प्रीतिपात्रस्य एकमात्रपुत्रस्य सुधीरस्य च पोषणं करोति।

कदाचित् एषः निर्धनः दिवं गतः। पितुः मरणात् सुधीरः निराश्रयः जातः। स्वस्य पोषणं स्वयं करणीयम् आपतितं तेन। 'पितुः मरणं स्मरन् दुःखम् अनुभवन् अश्रूणि स्रावयामि चेत् न किमपि प्रयोजनम्' इति मत्वा सुधीरः पञ्जरं गृहीत्वा अरण्यं गतवान्।

वृक्षशाखायां पञ्जरं बद्ध्वा अनतिदूरे निलीय उपविष्टवान् सुधीरः। अल्पे एव काले तेन ज्ञातं यत् कश्चन पक्षी पञ्जरे पतितः इति। सुधीरः पञ्जरसमीपं गत्वा दृष्टवान्। अन्तः कश्चन काकः पतितः अस्ति! 'हन्त! एतं काकं को वा क्रीणीयात्? एतं किं वा करोमि?' इति चिन्तयन् आसीत् सुधीरः।

तावता सः काकः मानवस्वरेण अवदत्– "मित्र! भवान् यदि मां करुणया बन्धविमुक्तं कुर्यात् तर्हि भवतः उपकारम् आजीवनं स्मरेयम्। अन्यच्च श्वः सुन्दरः पक्षी भवतः पञ्जरे यथा पतेत् तथा अपि करिष्यामि। तं पक्षिणं भवान् महाराजसमीपं नेष्यति चेत् प्रभूतं धनं प्राप्स्यति। मम वचने विश्वसितु कृपया" इति।

काकस्य ग्रहणेन कोऽपि लाभः तु नास्ति एव। अतः सुधीरः तं काकं बन्धविमुक्तं कृतवान्।

काकेन यथा उक्तं तथा, अनन्तरदिने पञ्जरे कश्चन सुन्दरः पक्षी पतितः। एतादृशः सुन्दरः पक्षी लोके स्यात् इति न

"काश्मीरीया जानपदकथा"



चिन्तितम् अपि आसीत् सुधीरेण। सः काकस्य वचनं स्मरन् तं पक्षिणं राजधानीं नीत्वा महाराजाय उपायनीकृतवान्। सुन्दरस्य एतस्य पक्षिणः प्राप्त्या राजा नितरां सन्तुष्टः। सः सुधीराय सहस्राधिकानि सुवर्णनाणकानि दत्तवान्।

एतावन्ति सुवर्णनाणकानि कथम् उपयोक्तव्यानि इति अजानन् सुधीरः ग्रामं गतवान्। यद्यपि प्रभूतं धनं प्राप्तम् अस्ति तथापि सुधीरस्य कष्टं न अपगतम्। तस्य कष्टं द्विगुणितं जातम्।

काश्मीरराजस्य आस्थाने कश्चन विदूषकः आसीत्। सः विनोदचतुरः इति तु सत्यं, किन्तु असूयाशीलः सः। सुधीराय यत् धनं दत्तं तत् दृष्ट्वा असूयां प्राप्य सः महाराजम् उक्तवान्– "प्रभो! सुन्दरः एषः पक्षी लोहमये पञ्जरे स्थापितः चेत् उचितं न भवेत्। अतः एतस्य निमित्तं गजदन्तैः किञ्चन रमणीयं भवनम् एव निर्मातव्यम्। तदा एव शोभा" इति।

"तावत्परिमाणकाः गजदन्ताः कुत्र लभ्यन्ते?" इति पृष्टवान् राजा।

"येन अपूर्वः एषः पक्षी एव आनीतः सः गजदन्तान् सङ्गृह्य न आनयेत् वा? आज्ञां करोतु भवान्। राजाज्ञाम् उल्लङ्घयितुं नार्हति सः" इति उक्तवान् विदूषकः।

एतत् अङ्गीकुर्वन् राजा सुधीरम् आनाय्य आज्ञापितवान्– "भोः, भवता यः अपूर्वः पक्षी आनीतः तस्य निमित्तं गजदन्तैः भवनं निर्मातव्यम् इति मम सङ्कल्पः। अतः मासाभ्यन्तरे भवता भवननिर्माणार्थं यावन्तः गजदन्ताः अपेक्ष्यन्ते तावन्तः आनेतव्याः। एषा मम आज्ञा। आज्ञा उल्लङ्घिता चेत् मरणदण्डनं भविष्यति" इति।

सुधीरः दुःखेन गृहं प्रत्यागतवान्। 'तावता प्रमाणेन गजदन्ताः आनेतुं न शक्याः इति राजा स्वयं जानाति। मम शिरच्छेदः कथमपि करणीयः इति उद्देशेन एव राज्ञा एवम् आज्ञा कृता' इति चिन्तयन् उपविष्टवान् सुधीरः। तावता काकः तस्य समीपम् आगत्य अपृच्छत्– "मित्र! का चिन्ता भवतः?" इति।

सुधीरः स्वस्य कष्टं विस्तरेण निवेदितवान्। तत् श्रुत्वा काकः अवदत्— "एतदर्थं चिन्तां मा करोतु। उपायम् अहं सूचयामि। भवान् महाराजं सम्प्रार्थ्य चत्वारिंशद्भाण्डमितां सुरां प्राप्नोतु। इतः शतयोजनदूरे किञ्चन सरोवरम् अस्ति। जलपानार्थं बहवः गजाः तत्र आगमिष्यन्ति। सुरां सरोवरजलेन योजयतु। इष्टं सिद्धं भावयतु। गजदन्तान् आनेतुं शकटान् अपि नयतु" इति।

सुधीरः महाराजसमीपं गत्वा चत्वारिंशत्भाण्डमितां सुरां प्रार्थितवान्। "सुरा प्राप्ता चेत् भवता सूचितात् समयात् पूर्वम् एव दन्तान् आनेष्यामि" इति उक्तवान् च।

राजा सुरायाः व्यवस्थां कृतवान्। सुधीरः काकेन सूचितं सरोवरं प्राप्य सरोवरजले सुरां पातितवान्।

रात्रौ गजाः जलपानार्थं सरोवरम् आगताः। सुरामिश्रितं जलं सन्तोषेण पीतवन्तः ते। मदवशात् तीरे पतिताः मूर्च्छां गताः च। सुधीरः क्रकचेन तेषां दन्तान् कर्तयित्वा शकटेषु पूरितवान्। प्रातःकालपर्यन्तम् एतत् कार्यं प्रवृत्तम्। गजदन्तैः सह सुधीरः राजसमीपं गतवान्। गजाः च सचेतनाः सन्तः अरण्यं गतवन्तः।

सुधीरेण आनीतान् गजदन्तान् दृष्ट्वा राजा नितरां सन्तुष्टः। सः अमूल्यं



पारितोषिकं दत्त्वा सुधीरं सत्कृतवान्। पक्षिणः निमित्तं गजदन्तैः सुन्दरं लघुभवनं निर्मितम् अभवत्।

एतत्सर्वं दृष्टवतः विदूषकस्य असूया द्विगुणितं प्रवृद्धा। सः महाराजम् उक्तवान्— "प्रभो, दन्तमये भवने पक्षी नितरां शोभते इति तु सत्यम् एव। किन्तु एषः पक्षी न गायति। एतस्य कण्ठस्वरः सुमधुरः स्यात् एव। स्वामी उपस्थितः चेदेव एषः पक्षी गायेत्" इति।

"एतस्य स्वामी कः इति कथं ज्ञातुं शक्यते?" इति पृष्टवान् राजा।

"यः एतं पक्षिणम् आनीतवान् सः एव एतत् जानीयात्" इति उक्तवान् विदूषकः।



राजा सुधीरम् आहूय– "पक्षिणः स्वामिनम् अन्विष्य आनीय पक्षी यथा गायेत् तथा न करोति चेत् भवतः शिरसः च्छेदः क्रियते। चत्वारिंशद्दिनेभ्यः पूर्वं कार्यं समापनीयम्" इति आज्ञापितवान्।

'मम कष्टम् इतोऽपि न अपगतं खलु?' इति यावत् सुधीरः चिन्तयन् आसीत् तावता काकः तत्र उपस्थितः।

"पुनः का चिन्ता? कीदृशं कष्टम् आपतितम्?" इति सुधीरम् अपृच्छत् काकः। सुधीरः स्वकीयं कष्टं निवेदितवान्।

"एतद्विषये अपि चिन्ता मास्तु भवतः। महाराजतः सुन्दरीम् एकां नौकां प्राप्नोतु। तस्यां सर्वविधानि भोगसाधनानि अपि अवश्यं भवेयुः। सुखासनानि उत्तमानि सुगन्धद्रव्याणि चापि भवन्तु तत्र। नदीप्रवाहम् अनुसृत्य शतयोजनदूरं गतं चेत् किन्नराणां द्वीपः प्राप्यते। किन्नराः सर्वे नौकां द्रष्टुम् उत्साहेन आगमिष्यन्ति। 'ऋते राज्ञ्याः अन्यस्य कस्यापि प्रवेशः नास्ति' इति सुस्पष्टं वदतु भवान्। यदा राज्ञी नौकाम् आरोहति तदा भवान् वेगेन नौकां प्रत्यानयतु। सा किन्नरराज्ञी एव एतस्य पक्षिणः स्वामिनी" इति अवदत् काकः।

काकस्य सूचनायाः अनुगुणं सुधीरः महाराजतः नौकां प्राप्तवान्। रमणीयतया सा नौका अलङ्कृता। अन्तः स्नानकासारः, तल्पः, सुखासनानि इत्यादीनि सज्जीकृतानि। काकेन सूचितायां दिशि नौका प्रस्थिता।

किन्नरद्वीपः प्राप्तः। किन्नराः अद्यावधि नौकाम् एव न दृष्टवन्तः आसन्। अतः ते महता उत्साहेन नौकां द्रष्टुम् आगताः। तदा सुधीरः तान् उक्तवान्– "प्रथमं भवतां राज्ञी नौकां पश्येत्। अनन्तरम् अन्ये द्रष्टुम् अर्हन्ति" इति।

एतत् श्रुतवत्याः किन्नरराज्ञ्याः महान् सन्तोषः। सा कुतूहलेन नौकाम् आरूढवती। नौकास्थान् प्रकोष्ठान्, अलङ्कारवस्तूनि, विविधान् वर्णमयान् दीपान्, तल्पान्, आसन्दान् च सा महता कुतूहलेन दृष्टवती। किन्तु तावता नाविकाः नौकां राजधानीं प्रति नेतुम् उद्युक्ताः। यावत् नौकादर्शनं समाप्तं तावता नौका द्वीपतः सुदूरं गता आसीत्।

किन्नरराज्ञ्या सह यदा सुधीरः राजभवने पदं स्थापितवान् तदा पक्षी स्वामिनीं दृष्ट्वा सन्तोषेण सुमधुरं गानम् अकरोत्। महाराजः एतेन नितरां सन्तुष्टः। किन्नरराज्ञ्याः सौन्दर्यातिशयं दृष्टवतः तु तस्य मनः विकसितम् अभवत्। सः तां परिणेतुम् इच्छन् तस्याः अनुज्ञां पृष्टवान्। किन्नरराज्ञी तस्य प्रार्थनाम् अङ्गीकृतवती।

विवाहमुहूर्तः निश्चितः। विवाहार्थं महान् सन्नाहः अपि आरब्धः। व्यवस्थायाः निर्वहणे सुधीरस्य एव प्रमुखं पात्रम् आसीत्।

विवाहसन्नाहे मग्नस्य सुधीरस्य स्कन्धस्य उपरि काकः आगत्य तदा तदा उपविशति स्म। किन्नरराज्ञ्या स च काकः दृष्टः। तदा सा कोपेन– "अये दुष्टे! निर्गच्छतु इतः। अत्रापि आगता वा भवती?" इति अतर्जयत्।

"आर्ये! एषः काकः मम मित्रम्। एतेन काकेन किमपि अप्रियं कृतं यदि स्यात् तर्हि क्षाम्यतु कृपया। एतस्य मार्गदर्शनस्य कारणतः एव एतत्सर्वं सम्पन्नम्" इति विनयेन उक्तवान् सुधीरः।

"एवं वा? काकरूपिणी एषा मम सखी किन्नरी एव। मम प्रीतिपात्रम् आसीत् एषा। एतस्याः सौन्दर्यमदः आसीत्। तं मदम् अपनेतुम् अहं एतां शापेन काकं कृतवती। किन्तु एतस्याः व्यवहारात् ज्ञायते यत् एषा यथापूर्वं मयि स्निह्यति इति। माम् अभ्युदयेन योजितवती एषा। अतः एतत्क्षणे एव एतस्याः शापात् विमोचनं भवतु" इति उक्तवती किन्नरराज्ञी।

तत्क्षणे एव काकः पक्षौ वेगेन चालयन् भूमौ अपतत्। सुधीरस्य पार्श्वे सुन्दरी किन्नरी स्थिता दृश्यते!

एतत्सर्वं दृष्ट्वा राजा नितरां सन्तुष्टः। शुभे मुहूर्ते किन्नरराज्ञी-काश्मीरराजयोः, किन्नरसखी-सुधीरयोः च विवाहः सवैभवं सम्पन्नः। विदूषकस्य असूयापरतां जानन् राजा तं शूलम् आरोपितवान्। सुधीरः राजास्थाने उच्चोद्योगं प्राप्य सुन्दर्या पत्न्या सह सुखेन जीवितवान्।



# चतुरः व्याघ्रः

काञ्चनपुरनामके ग्रामे शिवः नाम कश्चन अजपालकः आसीत्। सः प्रतिदिनं प्रातः स्वामिनः अजान् अरण्यं नयति, सायं च गृहं प्रापयति। कदाचित् शिवाय कानिचन रूप्यकाणि आवश्यकानि अभवन्। महान् प्रयत्नः कृतः चेदपि तेन कुतश्चित् अपि धनं न प्राप्तम्। अनन्यगतिकः सः स्वामिनः एकम् अजं विक्रीतवान्, स्वस्य आवश्यकतां पूरितवान् च।

तस्मिन् दिने सायं यदा शिवः अजान् गृहं प्रापितवान् तदा स्वामी यथापूर्वं अजानां गणनां कृतवान्। एकः अजः नास्ति इति ज्ञातवान् सः। अतः सः शिवं पृष्टवान्– "भोः, एकस्य अजस्य न्यूनता दृश्यते। कुत्र सः?" इति।

तदा शिवः भीतियुक्तेन स्वरेण– "श्रीमन्, मया एकः विषयः निवेदनीयः अस्ति। अद्य कश्चन चतुरः व्याघ्रः आगत्य कथमपि एकम् अजं गृहीत्वा पलायितवान्" इति उक्तवान्।

एतत् सत्यं स्यात् इति चिन्तितवान् स्वामी। "इतःपरम् एवं न भवेत्। जागरूकः तिष्ठतु" इति शिवं सूचितवान् सः। अनन्तरदिने अन्यः अजः अदृश्यतां गतः। शिवः उक्तवान् यत् चतुरेण व्याघ्रेण एव एषः अपि नीतः इति।

"एवं वा? तर्हि श्वः एव मृगयाचतुरेण शबरेण सह अहम् आगमिष्यामि। तं व्याघ्रं मारयिष्यामि" इति उक्तवान् स्वामी।

अनन्तरदिने सायङ्कालपर्यन्तं प्रतीक्षा कृता चेदपि व्याघ्रः न आगतः। तदा स्वामी पृष्टवान्– "कथम् अद्य व्याघ्रः न आगतः?" इति।

तदा शिवः हसन् उक्तवान्– "श्रीमन्, मया पूर्वम् एव उक्तम् आसीत् खलु – स च व्याघ्रः चतुरः इति? शबरस्य आगमनं तेन कथमपि ज्ञातं स्यात्। अतः यावत् शबरः अत्र स्थास्यति तावत् सः व्याघ्रः अत्र न आगमिष्यति" इति।

एतत् श्रुत्वा स्वामी हसन् उक्तवान्– "एवं वा? तर्हि अद्य आरभ्य शबरः एव मम अजान् चारयतु। भवन्तम् उद्योगात् निष्कासयिष्यामि" इति।

'उद्योगः गतः चेत् उपवासः एव शरणम्' इत्यतः शिवः स्वस्य अपराधम् अङ्गीकृत्य स्वामिनः पादौ गृह्णन् क्षमां प्रार्थितवान्। स्वामी तं क्षाम्यन्– "इतः परम् एवं वञ्चनां मा करोतु। अन्यथा भवता शोचनीया गतिः प्राप्येत" इति उक्तवान्।





# मन्दबुद्धिः कमला

श्रीहरिः नाम कृषिकः पूर्वं कस्मिंश्चित् ग्रामे निवसति स्म। विवाहानन्तरम् अल्पे एव काले तस्य पत्नी दिवङ्गता आसीत्। तस्मिन् एव ग्रामे कमला नाम काचित् अनाथा बालिका आसीत्। तां स्वगृहम् आनीय गृहकार्ये योजितवान् श्रीहरिः।

कमला आकारेण सुन्दरी। कार्येषु चतुरा अपि। प्रतिदिनं गृहकार्याणि शीघ्रम् एव समाप्य कर्मकरैः सह क्षेत्रे अपि कार्यं करोति। आलस्यं नाम्ना अपि न जानाति। आदिनं कार्यं कृत्वा अपि श्रान्ता न भवति। किन्तु तस्याः बुद्धिः न तीक्ष्णा।

कदाचित् सा श्रीहरिम् उक्तवती– "अहम् एव सर्वाणि गृहकार्याणि समीचीनतया कुर्वती अस्मि खलु? अतः कुतो वा भवता अहं न परिणेतव्या?" इति।

तदा हसन् उक्तवान् श्रीहरिः– "मया भवती परिणेतव्या? विचित्रः प्रस्तावः एषः। किन्तु अहं विवाहं न इच्छामि खलु? किं करोमि?" इति।

एतत् श्रुत्वा कमला– "किम् आजीवनम् एवम् एव तिष्ठति भवान्? सर्वं मिथ्या। किम् अहं योग्या वधूः न? मयि सत्यां, यदि भवान् अन्याम् एतत् गृहम् आनयेत् तर्हि अहं तु तूष्णीं न तिष्ठेयम्" इति उक्तवती।

कमला प्रतिदिनं विवाहविषये बहुधा पीडयति। एतां पीडां सोढुम् अशक्तः श्रीहरिः कदाचित् मदजनकम् औषधं क्षीरे योजयित्वा दत्तवान्। तत् क्षीरं पीत्वा क्षेत्रं गता कमला अल्पे एव काले निद्रया बाध्यमाना वृक्षस्य अधः सुप्तवती, गाढनिद्रां प्राप्तवती च।

तदा तत्र आगतः श्रीहरिः तैलमिश्रितेन कज्जलेन तस्याः शरीरं लिप्त्वा गतवान्। सायं सूर्यास्तसमये जागरणं प्राप्तवती कमला

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"



कृष्णवर्णीयं स्वस्य हस्तपादादिकं दृष्ट्वा भीता। 'अहं कमला एव उत काचित् पिशाची?' इति सन्देहं प्राप्तवती सा। अतः झटिति गृहं गत्वा श्रीहरिं पृष्टवती– "कमला अन्तः अस्ति वा?" इति।

हसन् उक्तवान् श्रीहरिः– "आम्। सा अन्तः कार्ये मग्ना अस्ति" इति।

"एवं तर्हि अहं का? कमला तु न। कमला श्रीहरिगृहे अस्ति। अहं काचित् पिशाची एव स्याम्" इति स्वगतं वदन्ती सा ततः निर्गतवती। अन्या गतिः नास्ति इत्यतः अरण्यं गतवती सा।

अरण्ये द्वौ चोरौ एतां दृष्टवन्तौ। एतस्याः रूपं दृष्ट्वा भीत्या पलायनार्थम् उद्युक्तौ तौ।

"भोः, किमर्थं भीतिः? भवन्तौ चोरौ किल? भवतोः चौर्ये अहं साहाय्यं करिष्यामि। तिष्ठतां तावत्" इति वदन्ती कमला धावन्ती तयोः समीपं गतवती।

'एषा पिशाची भवतु, अन्या वा। चौर्ये तु साहाय्यं कुर्यात्' इति आलोच्य तौ चोरौ भयं परित्यज्य तस्याः समीपं गतवन्तौ।

रात्रिः प्रवृद्धा। अद्य अजः चोरणीयः इति निश्चितवन्तौ चोरौ। किन्तु समीचीनः अजः कस्य गृहे अस्ति इति न जानीतः तौ।

तयोः विचारं ज्ञात्वा उक्तवती कमला– "भवतोः किमर्थं चिन्ता? कस्य गृहे समीचीनाः अजाः सन्ति इति अहं जानामि। अन्धकारे एव अपहर्तुम् अपि जानामि। भवन्तौ माम् अनुसरताम्" इति।

चोरौ नितरां सन्तुष्टौ। त्रयः अपि ग्रामं गतवन्तः। कमला एकं गोष्ठं प्रविष्टवती। चोरौ बहिः स्थितवन्तौ।

अन्तः गता कमला– "भोः, भवन्तौ अजम् इच्छतः उत अजाम्?" इति उच्चस्वरेण पृष्टवती।

"अये! उच्चस्वरेण मा वदतु। पीनत्वं दृष्ट्वा एकम् एकां वा आनयतु" इति उक्तवान् कश्चित् चोरः।

"पीनः अजः अपि अस्ति। पीना अजा अपि अस्ति। भवन्तौ किम् इच्छतः? अजम् उत अजाम्?" इति पुनरपि उच्चस्वरेण उक्तवती कमला।

"अये मन्दबुद्धे, किमप्येकम् अविलम्बेन आनयतु रे" इति क्रोधेन उक्तवन्तौ चोरौ।

तावता गृहस्य स्वामी जागरणं प्राप्य द्वारम् उद्घाट्य बहिः आगतवान्। गृहस्वामिनः आगमनं दृष्ट्वा चोरौ पलायितवन्तौ।

"भोः भोः, तिष्ठतां तावत्" इति वदन्ती गोष्ठतः बहिः आगतवती कमला। कृष्णवर्णीयां तां दृष्ट्वा पिशाचीं मत्वा दिग्भ्रान्तः गृहस्वामी।



अरण्यं प्राप्तवती कमला चोरौ निन्दितवती। चोरौ च कमलां निन्दितवन्तौ। किन्तु किं प्रयोजनं तेन? अनन्तरदिने चोरयोः कमलायाः च उपवासः एव गतिः।

यदा रात्रिः आगता तदा कश्चन चोरः अपरम् उक्तवान्— "कुक्कुटः चोरितः चेत् बुभुक्षा सुलभतया निवृत्ता भवेत्" इति।

तदा कमला— "उत्तमाः कुक्कुटाः कुत्र सन्ति इति अहं जानामि" इति वदन्ती ग्रामम् उद्दिश्य प्रस्थितवती। चोरौ ताम् अनुसृतवन्तौ।

कमला कस्यचित् गृहं गत्वा कुक्कुटवाससमीपं गत्वा— "अहो! पीनाः कुक्कुटाः!" इति स्वगतम् उक्त्वा चोरौ उद्दिश्य उच्चस्वरेण पृष्टवती— "भवन्तौ कुक्कुटम् इच्छतः उत कुक्कुटीम्?" इति।

"अये किमर्थम् उच्चैः कथनम्? समीचीनम् एकम् आनयतु रे" इति उक्तवन्तौ चोरौ।

"समीचीनाः कुक्कुटाः अपि सन्ति, कुक्कुट्यः अपि सन्ति। भवन्तौ किम् इच्छतः इति अहं किं जानामि? यत् सूचयतः तत् आनयामि। अतः शीघ्रं वदताम्। कुक्कुटम् आनयामि उत कुक्कुटीम्?" इति कोपेन पृष्टवती कमला।

तावता वार्तालापं श्रुत्वा गृहस्वामी बहिः आगतः। चोरौ तु पलायनं कृतवन्तौ।

"अये मूर्खौ! स्पष्टम् उत्तरम् अनुक्त्वा धावतः खलु भवन्तौ? एवं चेत् उदरपूरणं कथम्? तिष्ठतां तावत्" इति वदन्ती कमला तौ अनुसृत्य धावितवती।

चोरौ कुत्रापि पलायितवन्तौ। अतः दिनद्वयं यावत् महता अन्वेषणेन अपि तया तौ न

दृष्टौ। तृतीये दिने कुत्रचित् दृष्टौ तौ। परस्परं निन्दनं प्रवृत्तम्। चोरौ स्पष्टम् उक्तवन्तौ यत् भवती आवाभ्यां सह अस्ति चेत् आवयोः उपवासः एव गतिः। अतः भवती दूरं गच्छतु। चौर्यसमये आवां भवतीं सर्वथा न नेष्यावः इति।

महती बुभुक्षा कमलायाः। चोराभ्यां तिरस्कृता सा अनन्यगतिकतया कस्यचित् क्षेत्रं गत्वा तत्रत्यानि मिष्टालुकानि उत्पाट्य खादितुम् उद्युक्ता। पार्श्वे एव तस्य क्षेत्रस्य स्वामिनः गृहम् आसीत्। रक्षणार्थं प्रतिदिनं रात्रौ तदा तदा क्षेत्रे सञ्चरति सः। एवं सञ्चारार्थम् आगतः सः दूरात् एव कमलां दृष्ट्वा पिशाचीं मत्वा नितरां भीतः। तां ततः निवारयितुं मान्त्रिकस्य गृहं प्रति धावितवान् सः।

शयानं मान्त्रिकम् उत्थाप्य प्रभूतं धनं दास्यामि इति उक्त्वा तेन सह गृहसमीपम् आगतवान्। क्षेत्रं प्रति गमनार्थं पङ्कमयी भूमिः अतिक्रमणीया। "भवन्तम् उन्नीय अपरं तीरं प्रापयामि। पिशाचीं कथमपि इतः निवारयतु कृपया" इति वदन् सः कृषिकः मान्त्रिकम् उन्नीय पङ्कमये स्थले पदानि स्थापितवान्।

दूरात् एवं एतयोः आगमनं दृष्टवती कमला। चोरौ अजं मेषं वा आनयन्तौ स्तः इति मत्वा सा सन्तोषेण– "पीनः वा एषः? अहो, अद्य भूरि भोजनम्" इति उक्तवती।

एतत् श्रुत्वा नितरां भीतः कृषिकः– "भोः पिशाचि! पीनत्वम् अस्ति वा न वा इति भवती एव परिशीलयतु तावत्। मां तु मा पीडयतु" इति उक्त्वा मान्त्रिकं तत्रैव पातयित्वा ततः धावितवान्।

श्रीहरिणा ग्रामे प्रवृत्तं समग्रं श्रुतम्। कमलायाः शोचनीयां गतिं स्मृत्वा सः नितरां खिन्नः। सः तस्याः समीपं गत्वा स्वपरिचयम् उक्त्वा तां स्वगृहम् आनीय स्नापितवान्। उत्तमानि वस्त्राणि दत्तवान्। ततः अल्पे एव काले शुभे मूहुर्ते कमलां परिणीतवान् श्रीहरिः। तौ दम्पती सुखेन जीवितवन्तौ।



# ज्वालामुखिपर्वतः

क्रि.पू. १४७० तमे वर्षे तिरा(सैण्टोरिनी) नामकः ज्वालामुखिपर्वतीयद्वीपः विस्फोटितः अभवत्। ज्ञातेषु विस्फोटेषु एषः एव महान् इति गण्यते। एवं हि श्रूयते यत् एतस्य विस्फोटस्य कारणतः ७० घन कि.मी. लावारसः निर्गतः इति, एतस्य शक्तिः ४,००,००० एच्. बाम्बुशक्तेः समानः आसीत् इति च।

समग्रे प्रपञ्चे ४५५ सजीवाः ज्वालामुखिपर्वताः स्युः इति भाव्यते। इण्डोनिशियाप्रदेशे एव १६७ तः अधिकाः ज्वालामुखिपर्वताः सन्ति।

हवायीद्वीपे स्थितः 'मावुना लोवा' ज्वालामुखिपर्वतः एव प्रपञ्चस्तरे महान्। सागरतलात् शिखरपर्यन्तम् एतस्य औन्नत्यं १० क्रि.मी. स्यात्। एतस्य तलस्य विस्तारः २०० कि.मी. (१२४.२८ मैल्) भवेत्।



१७८३ तमे वर्षे दक्षिणपूर्वहिमद्वीपे जातात् विस्फोटात् यः लावारसप्रवाहः निर्गतः सः ऐतिहासिकः सुदीर्घः लावारसप्रवाहः इति परिगण्यते। एषः प्रवाहः ६५.७० कि.मी. (४३.५ मैल्) यावत् गतः अस्ति।

# सस्यवर्धने प्रीतिः

| | |
|---|---|
| सुरेशः- हरिओं, आगच्छतु भास्कर, अन्तः उपविशतु। | Hallo, Bhaskar! Come in, please sit inside. |
| भास्करः- अत्र सर्वत्र खननं कृतं दृश्यते! किमपि बीजम् उप्तं वा? | You seem to have dug there. Have you sown some seeds? |
| सु- आम्। पुष्पसस्यानां बीजानि उप्तानि। उद्यानं निर्मातव्यम् इति प्रयत्नः। तेन गृहस्य तु शोभा। परिसरस्य अपि लाभः। | Yes, I have sown seeds of some flowering plants there. The idea is to develop a garden; it gives a good appearance to the house. You know it is beneficial also from the environment point of view. |
| भा- एतस्य जलव्यवस्था कथम्? नगरसभाजलम् एव, उत ....? | Where do you get water from? It is corporation water or....? |
| सु- गृहस्य पृष्ठतः कूपः अस्ति। गृहस्वामिना यन्त्रं योजितम् अस्ति। अतः ततः जलम् उद्धृत्य सेचनं क्रियते। | No. There is a well in the back-yard. The owner has installed a pumpset. That is how we get water. |
| भा- एतस्मिन् गृहे कति वर्षाणि तिष्ठेत् भवान्? स्थानान्तरणं जातं चेत् एतत् गृहं परित्यक्तव्यम् एव खलु? | How long do you expect to stay here? When you are transferred you will have to leave these behind haven't you? |
| सु- तत् सत्यम्। किन्तु प्रयत्ने मम विश्वासः, न तु फले। यावत् अत्र तिष्ठामि तावत् उद्यानं पश्यन् सन्तोषं प्राप्नोमि एव। अनन्तरम् एतत् गृहं यः आगमिष्यति सः यथा इच्छा तथा करोतु नाम। | That is true. I believe in making my effort; outcome is not my concern. As long as I stay here, I enjoy the sight of this garden. Whoever comes in later can do as he pleases. |
| भा- परिसरप्रियः खलु भवान्! | Good, you really love nature. |

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

अभिज्ञः - Knowledgeable man
आजीवनम् - Lifelong
आवुत्तः - Brother-in-law
आसन्दः - Chair
कज्जलम् - An unguent applied to the eye
काचकम् - Glass
कुक्कुटी - Hen
क्रकचम् - Saw (N)
क्षतम् - Wound
क्षीणकाया - Lean
गोष्ठम् - Cowshed
तिरोधातुम् - To hide
दौहित्रः - Daughter's son
धीवरः - Fisherman
नवोढा - Newly-wed woman
निग्रहणम् - To control
पीनः - Well-built
पिदधातु - Shut
प्रतिभूः - Responsible
प्रसाधनम् - To decorate
प्राचार्यः - Principal
मन्थानः - Churning rod
मिष्टालुकम् - Sweet potato
रिक्तम् - Empty
लवित्रम् - Sickle
विचक्षणता - Discretion
वीजितवान् - Fanned
व्यजनम् - Fan
शयानः - Laid down
श्यालः - Wife's brother
श्वशुरः - Father-in-law
श्वश्रूः - Mother-in-law
सङ्केतः - Address
सानुरोधम् - Compulsorily
सुरा - Liquor
स्कन्धः - Shoulder
स्थालिका - Plate
स्नुषा - Daughter-in-law
स्वर्णकारः - Goldsmith
हठात् - Suddenly

* * *

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

विजितां शीर्षिकां सप्टम्बर्-९१ मासे प्रकटयिष्यामः।



G. Srinivasamurthy



Anant Desai

* उपरितनं चित्रद्वयं पश्यन्तु। * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा जुलै-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। * अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। * स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। * शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। * अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः—

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गरावूमार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

## 'मे'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः—

प्रथमचित्रम् - **स्वातन्त्र्यसुखं, परिजनसहवासः, सुखमयः समयः।**

द्वितीयचित्रम् - **पारतन्त्र्यदुःखं, पुनरेकाकिताऽपि, दुस्सहं जीवनम्।**

प्रेषकः - उमाशङ्करपाण्डेयः, बि ३०/९४, रुङ्गटाभवनम्, लङ्का, वाराणसी-२२१००५ (उ.प्र.)




Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.


---

# SUPER CHAMPS COLLECTION ★ SCHEME ★



## FREE

### स्पोर्टस्टार स्टिकर्स



**परम-आमोदकानि!**

**परम-आश्चर्यकराणि!**

संगृह्णन्तु चतुर्विंशतिः स्टीकर्स्, विजयन्तु भव्योपहारान्.

तानि सन्त्यत्रैव!

नूतनानि पञ्चविंशति-हाजमोला-केण्डी-'सुपरचैम्पुस्'-पुटकानि, आभ्यन्तरं भवतोऽभीष्ट-उत्कृष्ट-क्रीडकानां स्टीकर्स्. इमरान् खान्, इवान्-लेण्डल्, स्टेफी-ग्राफ्, अपि चान्ये अनेके सर्वेऽपि भवन्तं प्रतीक्षन्तेतराम्.

संगृह्णन्तु केवलं पञ्च स्टीकर्स् तथा 'ओह!' अभीष्टा 'सुपरचैम्पुस्'-संग्रह-पुस्तिका भवतो जाता।

अन्यदपि, भवान् आनन्ददायिनः हाजमोला-केण्डी-क्लबस्य निःशुल्कं सदस्यतामपि अधिगच्छति.

[प्रत्येकं 'सुपरचैम्पुस्'-पुटके विस्तृत-विवरणम्]

*त्वरताम्! आरभताम् अद्यैव भवतः 'सुपरचैम्पुस्'-संग्रहम्.*




**SURPRIZE**

प्रथमाः सहस्रं जनाः ये चित्रसंग्रहं पूर्णतां नयन्ति, ते उपहारान् प्राप्स्यन्ति।




*कषाया-मधुरा*



# Hajmola®

## CANDY

everest/d91/DIL/69 san

